देव-मनुष्य-गन्धर्वाप्सरसः सर्पाः पितर इति ब्राह्मणाभिहिताः पञ्चजनाः। "गम्भीरात् ञ्यः (४, ३, ५८)"—इत्यत्र "बहिर्देव पञ्चजनेभ्यश्चेति वक्तव्यम्(भा०वा०)"—इति वचनात् ञ्य-प्रत्ययः] तेषां तत्तदभीष्ट-प्रदानेन स्वभूतः* "ऋषिः" सर्व्वस्य द्रष्टा "पवमानः" पवमान-रूपः "अग्निः" "पुरोहितः" कर्मार्थमृत्विग्भिः पुरतो निहितः, "तम्" पूर्वोक्त-लक्षणं "महागयं" महद्भिरपि देवादिभिर्गातव्यं† [ महान्ति प्रभूतानि यज्ञ-गृहाणि यस्य वा स तथोक्तः, तम् ] "ईमहे" याचामहे ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १र २र ३ १ २
अग्नेपवस्वस्वपाअस्मेवर्च्चःसुवीर्य्यम्।

१ २ ३ १उ ३ १ २
दधद्रयिम्मयिपोषम्॥ ३ ‡ ॥१२

हे अग्ने! "स्वपाः" ["सोर्मनसी (६, २, ११७)"—इति उत्तरपदाद्युदात्तत्वम् ] शोभन-कर्मा¶ त्वम् "अस्मे" अस्मासु "सुवीर्य्यं" शोभन-वीर्य्योपेतं "वर्च्चः" [वर्च्च दीप्तौ (भ्वा० आ०)] तेजः "पवस्व" आ गमय। तथा भवान् "रयिं" धनं पुत्रं वा

* 'पाञ्चजन्यः—पञ्चभिर्जन्यते, चत्वारो महर्त्विजः पञ्चमो यजमानः तैर्जन्यते, अरण्योरुत्पाद्यते—इति वि०।

† 'महागयं—हृदयावस्थितम्'—इति वि०।

‡ ऋ० वे० ७, २, ११, १=य० वे० ८, ३८।

¶ 'स्वपाः—शोभना आपो यस्य स्वभूता अग्नौ स्वपाः स उच्यते'—इति वि०।

"पोषं" [भावे कर्मणि वा घञ्] गवां पुष्टिं यद्वा गवादिकं "मयि" "दधत्" दधातु करोत्वित्यर्थः [दधातेर्लेटि अडागमे—"घोर्लोपो लेटि वा (७, ३, ७०)"—इत्याकार-लोपः] ॥३॥ १२

अथाग्नेपावकेति तृचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १२३ १ २ ३१२

अग्नेपावकरोचिषामन्द्रयादेवजिह्वया।

२ ३१ २ ३१ २

आदेवान्वक्षियक्षिच॥ १ *॥

हे "पावक" शोधक! "रोचिषा" स्व-दीप्त्या "मन्द्रया" देवानां मादयित्र्या† "जिह्वया" च, हे "देव" द्योतमानाग्ने! "देवान्" "आ वक्षि" आवह, यज्ञार्थं "यक्षि च" तान् यज॥१॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २

तन्त्वाघृतस्नवीमहेचित्रभानोस्वर्दृशम्।

१ २उ ३ १ २

देवाँ३आवीतयेवह॥ २ ‡॥

* ऋ० वे० ४, १, १९,=य० वे० १७, ८।

† 'मन्द्रया—मङ्गलया'—इति वि०।

‡ ऋ० वे० ४, १, १९, २।

हे "घृतस्नो" घृतस्य प्रेरक ! * [यद्वा, घृतेन जनित ! हे "चित्रभानो !" चित्रा नानाविधा भानवो दीप्तयो रश्मयो यस्यासौ चित्रभानुस्तस्य सम्बोधनम्] "स्वर्दृशं" सर्वस्य द्रष्टारं "तं" "त्वा" त्वाम् "ईमहे" याचामहे, अतो "वीतये" हविषां भक्षणाय "देवान्" "आ वह" ॥ २ ॥

अथ तृतीया।

३ १ २ ३ २ ३ १ २
वीतिहोत्रन्त्वाकवेद्युमन्तꣳसमिधीमहि।

१ २ ३ १ २ ३ १
अग्नेबृहन्तमध्वरे ॥ ३ † ॥ १३

हे "कवे" क्रान्तदर्शिन् ! "अग्ने !" "वीतिहोत्र" क्रान्त-यज्ञं यद्वा प्रिययज्ञं, "द्युमन्तं" दीप्तिमन्तं "बृहन्तं" महान्तं, "त्वा" त्वाम् "अध्वरे" यज्ञे "समिधीमहि" समिद्भिः सन्दीपयामः ॥ ३ ॥ १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्दशस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

* 'घृतस्नो—घृतेन स्नाप्यते यः असौ घृतस्नुः तस्य सम्बोधनं हे घृतस्नो। इति वि०।

† ऋ० वे० ४, १, १९, ३ = य० वे० ११, ४।

अथ चतुर्थे खण्डे—

अवानोअग्नइति तृचात्मकं प्रथमं सूक्तम्।

तत्र प्रथमा।

१ २ ३ १ २ ३ २ ३ १ २

अवानोअग्नऊतिभिर्गायत्रस्यप्रभर्म्मणि।

१ २ ३ १ २

विश्वासुधीषुवन्द्य ॥ १ * ॥

"विश्वासु धीषु" सर्वेषु कर्मसु "वन्द्यः" स्तुत्यः हे "अग्ने!" "गायत्रस्य" गायत्र-साम्नः गायत्री-छन्दस्कस्य वा "प्रभर्मणि" प्रभरणे सम्पादने निमित्तभूते सति "नः" अस्मान् "ऊतिभिः" त्वदीयैः पालनैः "अव" रक्ष ["द्व्यचोऽतस्तिङः (६,३,१३५)"—इति संहितायां दीर्घत्वम्॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ १ २

आनोअग्नेरयिम्भरसत्रासाहंवरेण्यम्।

१ २ ३ २ ३ १ २

विश्वासुपृत्सुदुष्टरम्॥ २ † ॥

हे "अग्ने!" "रयिं" धनं "नः" अस्मभ्यम् "आ भर" प्रयच्छ॥ कीदृशम्? "सत्रासाहं" सत्रा सह युगपदेव दारिद्र्यस्य नाशकं "वरेण्यं" सर्वैर्वरणीयं "विश्वासु पृत्सु" सर्वेषु सङ्ग्रामेषु "दुष्टरम्" शत्रुभिस्तरीतुमशक्यम्॥ २ ॥

---

* ऋ० वे० १, ५, २७, १।

† ऋ० वे० १, ५, २७, १।

अथ तृतीया।

१ २ ३१ २ ३ २ ३ १ २
आनो अग्ने सुचेतुना रयिं विश्वायुपोषसम्।

३ १ २ ३ १ २
मार्डीकन्धेहि जीवसे ॥ ३ * ॥ १४

हे "अग्ने!" "नः" अस्माकं "जीवसे"† जीवनाय "सुचेतुना" शोभनेन ज्ञानेन युक्तं "रयिं" धनम् "आ धेहि" आस्थापय। कीदृशम्? "मार्डीकं" मृडीकं सुखं तद्धेतु-भूतं "विश्वायुपोषसं" सर्वस्मिन्नायुषि देहादेः पोषकं यावज्जीवमस्मदुपभोग-पर्याप्तमित्यर्थः‡ ॥ ३ ॥ १४

अग्निं हिन्वन्तीति पञ्चर्चं द्वितीयं सूक्तम्।

तत्र प्रथमा।

२ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अग्निं हिन्वन्तु नो धियः सप्तिमाशुमिवाजिषु।

१ २ ३ १ २
तेन जेष्म धनन्धनम् ॥ १ ¶ ॥

"नः अस्माकं "धियः" कर्माणि स्तुतयो वा "अग्निं" "हिन्वन्तु" प्रेरयन्तु यागार्थमुद्योजयन्तु वर्द्धयन्तु वा [ हि गतौ

---

* ऋ० वे० १, ५, २७, ३।

† "तुमर्थे से-सेनसेन्-क्से-क्सेनध्यै-अध्यैन्-कध्यै-कध्यैन्-शध्यै-शध्यैन्-तवै-तवेङ्-तवेनः ( ३, ४, ८ )'—इति पा०।

‡ 'विश्वायुपोषसम्—आयवो मनुष्याः बहु-मनुष्य-पोषणम्'—इति वि०।

¶ ऋ० वे० ८, ८, १४, १।

हृद्धो च। तत्र दृष्टान्तः—"आजिषु" सङ्ग्रामेषु "आशु" शीघ्र-गामिनं "सप्तिम् इव" सर्पण-शीलमश्वं यथा योद्धारः प्रेरयन्ति तद्वत्, "तेन" अग्निना "धनं धनं" सर्वं धनं "जेष्म" वयं जयेम ॥ १ ॥

अथ द्वितीया।

२३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
ययागाआकरामहैसेनयाग्नेतवोत्या।

१ २ ३ १ २
तान्नोहिन्वमघत्तये ॥ २* ॥

हे "अग्ने!" "सेनया" इनेन सह वर्त्तमानया, सेना-रूपया वा "यया" "तव" "ऊत्या" रक्षया "गाः" "आ करामहै" आभिमुख्येन करवामहै लभामहइत्यर्थः। "ताम्" ऊतिं "नः" अस्मान् "हिन्व" गमय†। किमर्थम्? "मघत्तये" धनस्य दाना-र्थम् अस्माकं धन-लाभायेत्यर्थः।

"करामहे"-"करामहे"—इति पाठौ ॥ २ ॥

अथ तृतीया।

१ २ ३२ ३ १ २ ३१२ ३२ ३ १ २
आग्नेस्थूरᳪरयिम्भरपृथुङ्गोमन्तमश्विनम्।

३ २उ ३ १ २ ३ २
अङ्धिखंवर्त्तयापविम् ॥ ३‡ ॥

---

* ऋ० वे० ८, ८, १४, २।

† 'हिन्व—सेवयामः'—इति वि०।

‡ ऋ० वे० ८, ८, १४, ३।

हे "अग्ने!" "स्थूरं" स्थूलं वृद्धं "पृथु" विस्तीर्णं "गोमन्तं" गोभिर्युक्तम् "अश्विनम्" अश्वोपेतम् "आ भर" अस्मभ्यमाहर प्रयच्छ। किञ्च "खम्" अन्तरिक्षम् "अङ्धि" वृष्ट्युदकैः सिञ्च [यद्वा आत्मीयैस्तेजोभिः व्यञ्जय प्रकाशय] "पविम्" आयुधं* "वर्त्तय" अस्मद्वैरीषु प्रवर्त्तय॥

"पविम्"-"पणिम्"—इति पाठौ॥ ३॥

अथ चतुर्थी।

२ ३ १ १   ३ २ ३ १र   २र   ३ २
अग्नेनक्षत्रमजरमासूर्य्यंरोहयोदिवि।
१ ३ २   ३   १ २
दधज्ज्योतिर्ज्जनेभ्यः॥ ४ †॥

हे "अग्ने!" "नक्षत्र" [नक्षति समन्ताद्गच्छतीति नक्षत्रः, नक्ष गतौ (भ्वा० प०) "अमि-नक्षि (उ०३,१०५)"—इत्यादिना अत्रन् प्रत्ययः] सततं गन्तारम् "अजरम्" जरा-रहितम् "सूर्य्यं" सर्व्वस्य प्रेरकमादित्यं "दिवि" अन्तरिक्षम् "आ रोहयः" उपर्य्यवस्थापितवानसि [यद्वा, नक्षत्रं कृत्तिकादिकं सूर्य्यञ्च दिव्यारोहयः]। किङ्कुर्वन्? "जनेभ्यः" सर्वेभ्यः प्राणिभ्यः व्यवहारार्थं "ज्योतिः" प्रकाशकं "दधत्" विदधत् कुर्वन्, यथा सर्व्वेषां प्रकाशो भवति तथा उन्नते देशे सूर्य्यमगमयदित्यर्थः॥ ४॥

---

* पविं—पावनशीलम्'—इति वि०।

† ऋ० वे० ८, ८, १४, ४।

अथ पञ्चमी।

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २

अग्नेकेतुर्विशामसिप्रेष्ठःश्रेष्ठउपस्थसत्।

१ २ ३ २उ ३ १ २

बोधास्तोत्रेवयोदधत्॥ ५ * ॥ १५

हे "अग्ने!" "विशां" प्रजानां यजमानानां "केतुः" केतयिता ज्ञापयिता "असि" भवसि। अतएव "प्रेष्ठः" प्रियतमः "श्रेष्ठः" प्रशस्यतमश्च भवसि स त्वम् "उपस्थसत्" उपस्थाने यज्ञगृहे निषीदन् "बोध" अस्मदीयं स्तोत्रमवगच्छ। किङ्कुर्वन्? "स्तोत्रे" स्तुवते जनाय "वयः" अन्नं "दधत्" विदधन् कुर्वन् प्रयच्छन् वा॥ ५॥ १५

अथाग्निर्मूर्द्धेतिऋचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

३ २ ३ २ ३ २ ३ १२ २२ ३ २ ३

अग्निर्मूर्द्धादिवःककुत्पतिःपृथिव्याअयम्।

३ १२ २२

अपाᳩरेताᳩसिजिन्वति॥ १ † ॥

"मूर्द्धा" देवानां श्रेष्ठः, "दिवः" द्युलोकस्य "ककुत्" "उच्छ्रितः", "पृथिव्याः" च "पतिः", "अयम्" "अग्निः" "अपां" "रेतांसि" स्थावर-जङ्गमात्मकानि भूतानि "जिन्वति" प्रीणयति॥ १॥

---

* ऋ० वे० ८, ८, १४, ५।

† छ० आ० १, १, ३, ७ (१भा० १३५ पृ०) = ऋ०वे० ६, ३, १९, २।

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ १ २ ३ २र
ईशिषे वार्यस्य हि दात्रस्याग्ने स्वःपतिः।
३ २ ३ २ ३ १ २
स्तोता स्यान्तव शर्मणि ॥ २ * ॥

हे "अग्ने!" "स्वःपतिः" स्वर्गस्य स्वामी त्वं "वार्यस्य" वरणीयस्य "दात्रस्य" दातव्यस्य धनस्य "ईशिषे" ईश्वरोऽसि "शर्मणि" सुख-निमित्ते तव "स्तोता" "स्यां" भवेयम् ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १र २र
उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते।
३ १ १ २ ३ १ २
तव ज्योतींष्यर्चयः ॥ ३ † ॥१६

हे "अग्ने!" "ते" तव "शुचयः" निर्मलाः "शुक्राः" शुक्लवर्णाः "भ्राजन्तः दीप्यमानाः "अर्चयः" प्रभाः "तव" "ज्योतींषि" तेजांसि "उदीरते" प्रेरयन्ति ॥ ३ ॥ १६

३ २ र र
॥ सत्रासाहीयम् ॥ अग्ना३४मिः। मूर्द्धा दिवः ककुत्।
५ ५ १ र १ १
ओ६वा। पतिःपृथिवियाआ२याम्। आ२पाम्। रा
२ १ ५ २र ३र २ १ ५ ५
२३यिता। सिजौ३हो। वाहा३४३यि। न्वा२३४तौ६हा

यि ॥(१) ईग्रा३४यि। षेवारियस्यद्दि। औो६वा। दा
चस्याग्निरुवःपा२तायिः। स्तो२ता। स्यार३न्ता। वशी
३हो। वाद्दा३४३यि। मार३४णो३हायि॥(२) उदा३
४। ग्रेशुचयस्तव। औो६वा। शुक्राभ्राजन्तईरा२ता
यि। वा२वा। ज्यो२३तायि। षियौ३हो। वाद्दा
३४३यि। चा२३४यो६हायि(३) ॥ १५ * ॥ [२] १६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्दशस्याध्यायस्य चतुर्थः खण्डः † ॥ ४ ॥

---

॥ इति सप्तमस्य प्रथमार्द्धप्रपाठकः ‡ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १४ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे चतुर्दशोऽध्यायः ॥ १४ ॥

---

* क० गा० १८प्र० २ख० १५सा० ।

† उक्ता एकाद्दाः सोम-पर्य्यन्ताः—इति वि० ।

‡ 'सप्तमस्य प्रथमः प्रपाठकः'—इति वि० ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १५ ॥

## ॥ अथ पञ्चदशोऽध्याय आरभ्यते ॥

तत्र,

प्रथमे खण्डे—

कस्तेजामिर्जनानामिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १र २र ३ २ ३ २ ३क २र
कस्तेजामिर्ज्जनानामग्ने कोदाश्वध्वरः ।
१ २ १ २ ३ २
कोहकस्मिन्नसिश्रितः ॥ १ * ॥

हे "अग्ने !" "जनानां" मनुष्याणां मध्ये "ते" तव "कः" "जामिः" को बन्धुः ? त्वं सर्वैर्गुणैरधिकोऽसि त्वत्स्वरूपो बन्धुर्नास्तीति भावः । "कः" "दाश्वध्वरः" [दाशुर्दत्त अध्वरो यज्ञो येन स तथोक्तः ] त्वां यष्टुमतिसमर्थः कोऽपि नास्तीत्यर्थः । "को ह" त्वं कथम्भूतः ? त्वमीदृगूप इति सर्वैर्ज्ञायसइत्यर्थः । "कस्मिन्" स्थाने "श्रितः" आश्रितः "असि" भवसि वर्त्तसे ? तत्स्थान-

* ऋ० वे० १, ५, २३, ३ ।

मपि न केन विज्ञायते [ अतस्त्वमस्माभिः मांसदृष्टिभिः कथमुपलब्धव्यः ?—इत्यग्निः प्रशस्यते ] ॥ १ ॥

अथ द्वितीया।

२ ३ १र २र३ १ २ ३ १ २ ३ २
त्वञ्जामिर्ज्जनानामग्नेमित्रोअसिप्रियः।
२ ३ १ २ ३ १ २
सखासखिभ्यईड्यः ॥ २ * ॥

हे "अग्ने!" "त्वम्" उक्त-प्रकारेण अचिन्त्य-रूपोऽपि अनुगृहीततया सर्वेषां "जनानां" "जामिः" बन्धुः "असि"। तथा "प्रियः" प्रीणयिता त्वं यजमानानां "मित्रः" असि। "ईड्यः" स्तुतिभिः स्तुत्यः त्वं "सखिभ्यः" समानेभ्यः ऋत्विग्भ्यः "सखा" सखिवदत्यन्तं प्रियोऽसि ॥ २ ॥

अथ तृतीया।

१ २ ३ १र २र ३ १ २ ३ २ ३ २ ३ १
यजानोमित्रावरुणायजादेवाँऋतम्बृहत्।
२ ३ २ ३ १र २र
अग्नेयक्षिस्वन्दमम् ॥ ३† ॥ १

हे अग्ने! "नः" अस्मदर्थं "मित्रावरुणा" एतत्संज्ञौ देवौ "यज" हविषा पूजय। तथा "देवान्" इन्द्रादीन् "यज" पूजय "ऋतं" सत्यं यथार्थ-फलं यज्ञञ्च यजेत्येव। तदर्थं

---

* ऋ० वे० १, ४, २३, ४।

† ऋ० वे० १, ४, २३, ५।

"बृहत्" प्रौढ़ं "स्व" स्वकीयं "दमं" यज्ञगृहं* "यचि" यज सङ्गच्छस्व त्वयि अन्तर्विद्यमाने सति हि यज्ञगृहं पूज्यते ॥ ३ ॥ १

अथ द्वितीय-तृचे—प्रथमा।

२ १ १ ३क २र ३ १र २र २ १
ईडेन्योनमस्यस्तिरस्तमाꣳसिदर्शतः।

१ २ १ २ ३ १ २
समग्निरिध्यतेवृषा ॥ १ † ॥

"ईडेन्यः" स्तोतृभिरीड्यः अतएव "नमस्यः" सर्वैर्नमस्कार्यः "तमांसि तिरः" ध्वान्तानि स्वाभाभिस्तिरस्कुर्वन् "दर्शतः" कमनीयतया सर्वैर्दर्शनीयः; तादृशः "अग्निः" "वृषा" यजमानस्य कामानां वर्षिता "समिध्यते" आहुति-प्रक्षेपेण प्रज्वाल्यते। उक्तार्थे वाजसनेयकम्—"ईडेऽन्यो ह्येष नमस्यो ह्येष तिरस्तमांसि ददृशे समिद्धः"—इति ॥ १ ॥

अथ द्वितीया।

१२ ३ १र २र ३ २ ३ १२ ३ १ २
वृषोअग्निःसमिध्यतेश्वोमदेववाहनः।

२ ३ १ २
तꣳहविष्मन्तईडते ॥ २ ‡ ॥

"वृषा उ" वृषैव¶ कामानां वर्षिता "देववाहनः [देवान् हवींषि वाहयति प्रापयतीति देव-वाहनः] तत्र दृष्टान्तः—

* 'स्वन्दमम्—आत्मीयं घर्म-रश्मि-संयुक्तम्'—इति वि०।

† ऋ० वे० ३, १, ३०, ३। ‡ ऋ० वे० ३, १, ३०, ४।

¶ 'उ—इति पादपूरणः'—इति वि०।

"अश्वो न" यथाश्वो राजानं वाहयति स्व-पुरं प्रापयतीति वाहन-भूतो यः "अग्निः" "समिध्यते" आहुति-प्रदानेन सम्यग् दीप्यते "तं" तादृशमग्निं "हविष्मन्तः" सम्भृत-हविष्का यजमानाः "ईडते" कर्म-सिद्ध्यर्थं स्तुवन्ति ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २
वृषणन्त्वावयं वृषन्वृषणः समिधीमहि।

१ ३ १ २ ३ २
अग्नेदीद्यतम्बृहत् ॥ ३ * ॥ २

"वृषन्" कामानां वर्षितः। हे "अग्ने!" "वृषणः" वृषणाः घृताद्याहुतीनां सेक्तारो वयं वृषणम् आहुति-द्वारा उदकस्य सेक्तारं तथा च स्मृतिः—"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः (मनु ३,७६)" —इति "दीद्यन्तं" दीप्यमानं "बृहत्" अतएव महान्तं तमिमग्निं "समिधीमहि" सम्यग् दीपयामः ॥ ३ ॥ २

तृतीय-तृचे—प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १ २
उत्ते बृहन्तो अर्चयः समिधानस्य दीदिवः।

१ २ ३ १ २
अग्ने शुक्रास ईरते ॥ १ † ॥

---

* ऋ० वे० ३, १, ३०, ५।

† ऋ० वे० ६, ३, ३६, ४।

हे "दीदिवः" दीप्ताग्ने ! "समिधानस्य" समिध्यमानस्य "ते" तव "बृहन्तः" महान्तः "शुक्रासः" ज्वलन्तः "अर्चयः" दीप्तयः "उदीरते" उद्गच्छन्ति ॥ १ ॥

अथ द्वितीया ।

१ २ ३ २ १ २ ३ १ २
उपत्वाजुह्वोऽ३ममघृताचीर्यन्तुहर्यंत ।

१ २ ३ १ २
अग्नेहव्याजुषस्वनः ॥ २ * ॥

हे "हर्यंत" कामयमानाग्ने ! "मम" मदीया "घृताचीः" घृतमञ्चन्त्यः जुह्वः स्रुचः "त्वा" त्वाम् "उप यन्तु" । "नः" अस्माकं "हव्या" हव्यानि "जुषस्व" सेवस्व च ॥ २ ॥

अथ तृतीया ।

३ १र २र ३ १ २ ३ १ २ ३ १ २
मन्द्रꣳहोतारमृत्विजञ्चित्रभानुंविभावसुम् ।

३ १ २ ३ १ २
अग्निमीडेसउश्रवत् ॥ ३ † ॥ ३

"मन्द्रं" मोदनं "होतारं" देवानामाह्वातारम् "ऋत्विजम्" ऋतौ यष्टव्यं "चित्रभानुं" विविधदीप्तिं "विभावसुं" दीप्तिधनम् ‡

* ऋ० वे० ६, ३, ३६, ५ ।

† ऋ० वे० ६, ३, ३७, १ ।

‡ 'विभावसुं—विश्वस्य सर्वस्य भावयितारम्'—इति वि० ।

"अग्निम्" "ईडे" स्तौमि । "सः" अग्निः "अवत् उ"* अस्मदीयां स्तुतिं शृणोत्वेव ॥ ३ ॥ ३

५ र २ ४ र ५ २ १
॥ आमहीयवम् ॥ उत्तेबृ३हन्तोअर्चयाः । समायि

२ १ २ १र २ १
धा१ना२ । स्त्रदा२३यिदिवाः । अग्नेशुक्रा । सञ्आ२३

२ ५ २ ४ ५र २ १ २
यिरताउ । वा३ ॥(१) उपत्वा३जुह्वोममा । घृताचा

१ २ १र २ १
१यिर्या२ । ओहा२३र्यता । अग्नेहव्या । जुषा२३स्व

२ ५ २ ४र ५ २ १
नाउ । वा३ ॥(२) मन्द्रꣳहो३तारम्त्विजाम् । चित्रा

२ १ २ १ २र १
भा१नू२म् । विभा२३वसूम् । अग्निमीडायि । सऊ

२ २र १ १ १ १
२३श्रवाउ । वा३ । स्तोषे२३४५(३) ॥ १४ † ॥ [१]

२ र १ २ १ २ १
॥ जराबोधीयम् ॥ मन्द्रꣳहोतोवा । राम्त्विजाम ।

२ १ २ र १ २
चित्राभा२३नूम् । विभावाहम् । अग्नायिमा१यिडा२३

४ ५ ३ २
यिसाः । उ । अवो३४५ई । डा(२) ॥ १५ ‡ ॥ [२] ३

---

* 'उ—इति पद-पूरणः'—इति वि० ।

† ऊ० गा० १०प्र० २अ० १४सा० ।

‡ ऊ० गा० १०प्र० २अ० १५सा० ।

अथ प्रगाथात्मके चतुर्थ-सूक्ते —

प्रथमा ।

३ १ २ ३ १ २ ३ २ २ ३ १ २
पाहिनोअग्नएकयापाह्यू ऽ३ ऽतद्वितीयया ।

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
पाहिगीर्भिस्तिसृभिरूर्ज्जाम्पतेपाहिचतसृभिर्वसो ॥१*॥

हे "अग्ने" "नः" अस्मान् "एकया" ऋचा गिरा "पाहि" रक्ष । "उत" अपिच "द्वितीयया" ऋचा "पाहि" पालय । "पाहि" "तिसृभिः" "गीर्भिः" "ऊर्जाम्" अन्नानां बलानां वा "पते" स्वामिन् ! । तथा "पाहि" "चतसृभिः" गीर्भिः हे "वसो" वासकाग्ने ! ॥ १ ॥

अथ द्वितीया ।

३ १र २र ३ २ ३ २ २ ३ १ ३ १ २
पाहिविश्वस्माद्रक्षसोअराव्णःप्रस्मवाजेषुनोव ।

१र २र ३ १ २ ३ १र २र ३ २
त्वामिद्धिनेदिष्ठन्देवतातयआपिन्नक्षामहेवृधे ॥२†॥४

हे "अग्ने" "विश्वस्मात्" सर्वस्मात् "रक्षसः" "अराव्णः" अदातुः सकाशात्‡ "पाहि" रक्ष । सोऽस्मान् "वाजेषु" सङ्ग्रामेषु "प्राव" प्रकर्षेण रक्ष । "स्म"—इति पूरणः । "हि" यस्मात्

---

* छ० आ० १, १, ४, १ (१भा० १५१पृ०) ऋ० वे० ६, ४, ३२, ४ ।

† ऋ० वे० ६, ४, ३२, ५ ।

‡ 'अराव्णः—मिथ्याकर्म-कारिणः'—इति वि० ।

"नेदिष्ठम्" अन्तिकतमम्* "आपि" बन्धुभूतं "त्वाम् इत्" त्वामेव† "देवतातये" यज्ञाय सिद्ध्यर्थं "वृधे" वर्द्धनाय "नक्षा-
महे" व्याप्नुमः [नक्षति व्याप्तिकर्मा (निघ० २,१८,२) ॥ २ ॥ ४

२र र १ ५ १
॥ रौरवम् ॥ पाहिनोअग्ना३आयिका२३४या । पाह्यु
र र र र र ३ २ १ २
तद्वितीययापाहिगीर्भिस्तिसृभिरूर्ज्जा२म्पतायि। ओहा
२ १र २ १ २ २
३उवा। पाहिचतसृभा२ ३ यिर्वायि। ओहा ३ उवा।
१ २ ४ ५ २र ५
वसा। औ३होवा ॥(१) पाहिचतमृ३भिर्वा२३४साउ।
१ र र र र ३र २ १
पाहिचतसृभिर्वसोपाहिविश्वस्माद्रक्षसोआ२राव्णाः। ओ
२ २ १ र र २ १ २ २
हा३उवा। प्रस्मवाजेषुना२३हायि। ओहा३उवा। अ
१ २ ४ ५ २ र र २र ५ १
वा। औ३होवा ॥(२) प्रस्मवाजेषू३नोआ२३४वा। प्रा
र र र र र र ३ १ १ २
स्मवाजेषुनोवत्वामिद्धिजेदिष्टन्देवता२तयायि। ‡ओहा३
२ १र र २ १ २ २
उवा। आपिन्नक्षामहा२३यिहायि। ओहा३उवा। वृ
१ २ ४ ५ ४
धा। औ३होवा। होऽ५इ। डा(३) ॥ १६ ॥ [१]

* 'नेदिष्ठं—गुणैरभ्यधिकम्'—इति वि० ।

† 'इत्—इति पदपूरणः'—इति वि० ।

‡ ऊ० गा० १०प्र० २अ० १६सा० ।

२र र र र र र २ २ ३
॥ दैर्घश्रवसम् ॥ पाद्दिनोअग्नएकयाओद्दाओद्दा३ए ।
१र १ २ १र २ ५ २ ५ २ २
पाहा२उतद्वितीया२या । ओ३हा । ओ३द्दा३ए३४ ।
३र २ १र २ १ २ र १ २
पाहा३४यिगीर्भायिः । नायिसृभिः । ऊर्ज्जाम्पताथि ।
५ २ ५ २ २ ३र २ १ २ २ १
ओ३हा । ओ३द्दा३ए३४ । पाहा३४यिचता३ । द्दभो
५ ४ ५
२३४वा । वा५सो६द्दायि(१) ॥ १७ * ॥ [२]

२र १ २ र १ २ १ र
॥ सम्मतम् ॥ पाद्दिविश्वस्माद्रहसाः । अरावणःप्र
र र र र २ १ २र
स्वाजेषुनोअवा । तुवामार३यिद्धो । नायिविष्टन्दे ।
२ २ ३र २ ३र २ १र
वतातायां । औद्दो३४वाहायि । आ । पायिम्ना २ ३
२ १ २ २ १र २ १
द्दा३ । द्दोवा३द्दायि । मद्देवार३द्वा३४३यि । ओ२३
४५ई । डा(३) ॥ १८ † ॥ [३]

३र २ २ ४ ५र ३
॥ यौधाजयम् ॥ पाहा३१यि । नो३अ । म्न । आयिका
५ १ २ १ ३ २ २
२३४या । पाद्दा३यि । उता२ । द्दिता३४५ । या२३४

* ऊ० गा० १०प्र० २ख० १७सा०

† ऊ० गा० १०प्र० २ख० १८सा० ।

५ २र १ २र १ २ १ ३र २
या। पाहायिगार्भायि। ति। ह्मार्यिः। ऊर्जा३४५म्।
१ ५ २र १ ३ २
पा२३४ते। पाहा२यि। चता२। मूभा३४५यिः।
३ ५ ३र १ २ ४ ५ २ ३
वा२३४सो॥(१) पाहा३१यि। चा३त। सू। भिर्वा२३
५ १ २ १ ३ २ ३
४साउ। पाहा३यि। चता२। सुभा३४५यिः। वा२
५ २र १ २ १ २र १ ३र २
३४सा। पाहायिविश्वा। स्मात्। रचा२। सोआ३
३ ५ २ र ३ १
४५। रा२३४वृणाः। प्रसा२यि। वाजा२यि। पुनो३४५।
३ ५ ३ १ २ ४र ५ २ ३ ५
आ२३४वा॥(२) प्रसा३१। वा३जे। पु। नोआ२३४वा।
१ १ १र ३ २ ३ ५ २ १
प्रासा३। वाजा२यि। पुनो३४५। आ२३४वा। तुवा
२ १ २ र १ ३ २ ३ ५
मिद्धायि। ने। दिष्ठन्दा२यि। वता३४५। ता२३४ये।
२र १ ३ २ ३ ५
आपा२यिम्। नाचा२। मह्वे३४५। वा२३४द्वै(३)

॥१८*॥ [४] ४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चदशस्याध्यायस्य

प्रथमः खण्डः॥ १॥

---

* ऊ० गा० १०प्र० २ख० १८सा०।

अथ द्वितीय-खण्डे—

इनोराजन्निति तृचात्मके प्रथम-सूक्ते,

प्रथमा ।

३ १ २    ३ १र    २र ३
इनोराजन्नरतिःसमिद्धो
१ १ १२    ३ १    २
रौद्रोदक्षायसुषुमाॅ अदर्शि ।
३ १र २र    ३ १ २ ३ १
चिकिद्विभातिभासाबृहता
२    ३ १ २    ३ १ २
सिक्नीमेतिरुशतीमपाजन् ॥ १ * ॥

हे "राजन्" दीप्यमानाग्ने ! † त्वम् "इनः" ईश्वरः सर्वस्य भवसि । अथ परोक्षः—"अरतिः" हविरादाय देवान् प्रति गन्ता "समिद्धः" सन्दीप्तः "रौद्रः" शत्रूणां भयङ्करः "सुषुमान्" ओषध्यात्मना स्थितेरंशुः सुष्ठु सूयत इति सुसोमः, तेन तद्वान् शोभन-प्रसवो वा सोऽग्निः "दक्षाय" यजमानानां धनादि-वृद्ध्यर्थं कर्म-वृद्ध्यर्थं वा "अदर्शि" सर्वैर्दृश्यते । किञ्च "चिकित्" सर्वं जानानोऽग्निः "विभाति" विशेषेण दीप्यते तथा "बृहता" महता "भासा" तेजसा ज्वाला-लक्षणेन "असिक्नीं" रात्रिम् "एति" सायं-होम-सिद्ध्यर्थं गच्छति । किङ्कुर्वन् ? "रुशतीं"

---

* ऋ० वे० ७, ५, ३१, १ ।

† 'इनः राजाभिधीयते, द्वितीयं यद्राज-ग्रहणं तदग्नेरेव शोभत्वं प्रतिपादयति' —इति वि० ।

श्वेतवर्णां दीप्तिम् "अपाजन्" अपगमयन् सर्वतो विक्षिरन् [यद्वा, कृष्णतीं दीप्तामुषस मागच्छन् अपक्षिपन् परित्यजन् रात्रिं गच्छति। सामर्थ्याद्रात्रिं परित्यजन्नुषसं प्रातर्होमसिद्धार्थं गच्छतीत्यर्थो लभ्यते ॥ १ ॥

अथ द्वितीया।

३ १र २र ३ १र २र ३ २
कृष्णांयदेनीमभिवर्पसाभू

३ २३ १ २ ३ २ ३ २
ज्जनयन्योषांबृहतःपितुर्जाम्।

३ २ ३ १र २र ३ २
ऊर्द्ध्वम्भानुꣳसूर्यस्यस्तभाय

३ १र २र ३ १र २र
न्दिवोवसुभिररतिर्विभाति ॥ २* ॥

सोऽग्निः "यद्" यदा "कृष्णां" कृष्ण-वर्णाम् "एनीं" गच्छतीं रात्रिं "वर्पसा" आत्मीयेन ज्वाला-लक्षणेन रूपेण "अभिभूत्" अभिभवति। किङ्कुर्वन्? "बृहतः" महतः "पितुः" सर्वस्य जगतः पालयितुः पितृभूताद्वा आदित्यात् "जां" जायमानां "योषाम्" उषसं "जनयन्" अभिव्यञ्जयन्। तदा "अरतिः" गमनशीलोऽग्निः "दिवः" द्युलोकस्य "वसुभिः" वासयितृभिः आच्छादनैः आत्मीयैस्तेजोभिः "सूर्यस्य" "भानुं" दीप्तिम् "ऊर्द्ध्वम्" उपरिष्टात् "स्तभायं" स्तम्भयन् "वि भाति" विशेषेण दीप्यते ॥ २ ॥

* ऋ० वे० ७, ५, ३१, २।

अथ तृतीया।

३ २ ३ २ ३ १ २ ३ २ ३
भद्रो भद्रया सचमान आगात्

१ २ ३ २ ३क २र ३ २
स्वसारं जारो अभ्येति पश्चात्।

३ १र २र ३ २ ३ २ ३ १
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्

२ ३ १ २ ३ २ ३ १ २
रुशद्भिर्वर्णैरभि राममस्थात्॥ ३ *॥ ५

"भद्रः" भजनीयः कल्याणः "भद्रया" भजनीयया 'सचमानः "आगात्" आगच्छति। ततः "पश्चात्" "जारः" जरयिता शत्रूणां "सोऽग्निः" "स्वसारं" स्वयं सारिणीं भगिनीं वा आगतामुषसम् "अभ्येति" अभिगच्छति। तथा "सुप्रकेतैः" "सुप्रज्ञानैः "द्युभिः" दीप्तिभिस्तेजोभिः सह "वितिष्ठन्" सर्वतो वर्त्तमानः सोऽग्निः "रुशद्भिः" श्वेतैः "वर्णैः" वारकैरात्मीयैस्तेजोभिः "रामं" कृष्णं शार्वरं तमः† "अभ्यस्थात्" सायं-होमकाले अभिभूय तिष्ठति॥ ३॥ ५

* ऋ० वे० ७, ५, ११, ३।

† "अभिरामं—अभिरमणीयं रूपमस्थात्'—इति वि०।

१ २ १र २
॥ औशनम् ॥ आयिनाः। राजन्नरतायिः। समा
२ १र २ २ २१र२ १
३यिद्वाः। राजानरतायिः। समा३यिद्वाः। रौद्रोदचा।
२ १ २ ३४५ १ र र ७
या३सुषु। मा ऽ३ अदशा। चिकिद्विभातिभासा। वृहा
२ १२र १ २ १ २ २
२३ता। असिक्नीमायि। तौ३रुषु। तौ३४३म्। आ
४ १ २ १र र
२पा५जाई५ईन् ॥(१) कार्ष्णाम्। यद्देनीमभिवा। प
२ २ १२१ २ १ २३४५ १र
सा३भूत्। जनयन्यो। षा३म्बृह। तःपितुर्ज्जाम्। ऊ
र र ७ २ १र२१ २
र्द्ध्वामु ऽ३ स्य्यँस्था। स्तभा२३यान्। द्दिवोवह्न। भी३
१ २ २ ४ १ २
रर। ता३४३यिः। वा३यिभा५ता६५ईयि ॥(२) भाद्राः।
१ र २ २ १र२ १ २ १
भद्र्यासचमा। नया३गात्। स्वसारञ्जा। रो३अभि।
२३४५ १र र ७ २
एतिपश्चात्। सुप्रकेतैर्द्युभिरग्नायिः। विता२३यिष्ठान्।
१२१ २ २ ३४
रुशद्भिर्वा। णै३रभि। रा३४३। मा ३ मा ५ स्था ६
५ईत्(३) ॥ २० * ॥ [१] ५

---

* ऊ० गा० १०प्र० २ख० २०सा० ।

अथ द्वितीय-सूक्ते —

प्रथमा ।

१ २   ३ १ २   ३ १ २
कयाते अग्ने अङ्गिर ऊर्ज्जोनपादुपस्तुतिम् ।

१ २   ३ १ २
वरायदेवमन्यवे ॥ १ * ॥

हे "अङ्गिरः" अङ्गिरसां वरिष्ठ! [यद्वा, अङ्गति सर्वत्र गच्छतीति अङ्गिराः तादृश!] हे "ऊर्जोनपात्" ['नपात्'—इत्यन्ननाम (निघ० २,२,१३)] अन्नस्य पुत्र! [हविर्भिर्वर्द्धमानत्वात्! यद्वा नपादिति नप्ता, हविर्लक्षणस्यान्नस्य नप्तः!]। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः (मनुः३,७०)"—इति वृष्टेरोषधय ओषधिभ्योऽग्निरिति अन्नस्य नप्ता] हे "देव" द्योतमान! "अग्ने" "वराय" सर्वैर्वरणीयाय† "मन्यवे" शत्रूनभिमन्यमानाय ‡ "ते" तुभ्यं "कया" कीदृश्या वाचा "उपस्तुति" स्तोत्रम् अहं मरेयम्। त्वं महान् खलु अहमल्पः तदर्थं कथं स्तुतिं कुर्य्यामिति ऋषिरग्निं प्रति वदति॥१॥

---

* ऋ० वे० ६, ३, ५, ४ ।

† 'वराय—वरिष्ठाय'—इति वि० ।

‡ 'मन्यवे'—दीप्तप्र'—इति वि० ।

अथ द्वितीया ।

१ २ ३ २ ३ १ २ ३ १ २
दाशेमकस्यमनसायज्ञस्यसहसोयहो ।
१ २ ३ १ २
कदुवोचइदन्नमः ॥ २ * ॥

ऋषिरग्निम्प्रति ब्रूते—हे "सहसोयहो" ['यहुः'—इत्यपत्य-नाम (निघ० २, २, ११) बलेन निष्पाद्यमानत्वात्] बलस्य पुत्र ! हे अग्ने ! "कस्य" कीदृशस्य "यज्ञस्य" यज्ञवतो यजनीय-देववतो वा यजमानस्य "मनसा" युक्ताः सन्तो हवींषि तुभ्यं वयं "दाशेम" प्रयच्छेम† [पूजायां बहुवचनम्] किञ्च, तुभ्यम् "इदं" "नमः" हविर्नमस्कारं वा "कत्" कदा‡ "वोचे" अहं वदामि ? "उ" [—इति प्रश्ने । ऋषिः, 'कदा दास्यामि ? कदा स्तोष्यामि ?'—इत्यग्निं पृच्छति । वोचे—ब्रूआदेशस्य लुङ्यात्मने पदे उत्तमैकवचने रूपम् ] ॥ २ ॥

अथ तृतीया ।

२ ३ २उ ३ २ ३ १ २ ३ १ २ ३ २
अधात्वंहिनस्करोविश्वाअस्मभ्यꣳसुक्षितीः ।
१ २ ३ १ २
वाजद्रविणसोगिरः ॥ ३ ¶ ॥ ६

---

* ऋ० वे० ६, ३, ५, ५ ।

† 'दाशेम—दद्म'—इति वि० ।

‡ 'कत् उ वोचे—कउवोचे—इत्येवं द्रष्टव्यम् । नपुंसके पुंल्लिङ्गः'—इति वि० ।

¶ ऋ० वे० ६, ६, ६, १ ।

हे अग्ने ! "अध" अथानन्तरं "त्वं हि" [हिरवधारणे] त्वमेव "अस्मभ्यम्" "करः" कुरु देहीत्यर्थः [करोतेर्लेटय-ड़ागमः]। किमित्यपेक्षायामाह—"नः" अस्मदीयाः "गिरः" त्वद्विषयाः "विश्वाः" सर्वाः स्तुतीः एवं कुरु यथा "सुक्षितीः"* [क्षियन्ति निवसन्त्यत्रेति, क्षितयो गृहाः शोभन-निवासाः यद्वा] हित-मनुष्याः—कल्याण-पुत्र-पौत्र-युक्ताः, तथा "वाजद्रविणसः" अन्न-युक्ता धनवतीः अथवा वाजो दीप्तिः; सर्व्वतो दीप्तिधनाश्च कुरु। त्वमस्माभिः स्तुतः सन् गृह-पुत्रान्न-धनादीनि देहीत्यर्थः ॥३॥

३ र र ४ २ ४
॥ महावामदेव्यम् ॥ काऽ५या। तेआ३ग्ने३अङ्गि
५ १ र र २ १ र २
राः। ऊ। र्जोनपादुपस्तु। तायिम्। औ२३होहा
१ २ ३र २ १ १
यि। वरा२३यदायि। वमौहो३। ऊम्मा२। न्याऽ२
२ ३ र ४ २ ४ ५ १
वो३५हायि ॥(१) दाऽ५शे। मका३स्या३मनसा। या।
२ र १ २ र २ १ र २
ज्ञस्यसहसोय। हा। औ३होहायि। कदू२३वोचायि।
३ र २ १ १ २ ३
इदौहो३। ऊम्मा२। नाऽ२मो३५हायि ॥(२) आऽ५
र ४ २ ४ ५ १ र
धा। तुवा३ꣳहा३यिनस्करा:। वायि। श्वाअस्मभ्यꣳ

* 'सुक्षितीः—शोभनाः क्षितीः क्षेत्राणि अधस्तात् करोषि'—इति वि०।

२ १ २ १ १र २
सुक्षि। तायिः। औ२३होहायि। वाजा२३द्रवायि।
३ र २ १ १ २
णसोहो३। ऊम्मा२। गा२यिरो३५हायि(३) ॥१*॥ [१]६

अग्नआयाहीति प्रगाथरूपे तृतीय-सूक्ते,

प्रथमा।

२ ३ १ २ ३ २ ३ १ २
अग्नआयाह्यग्निभिर्होतारन्त्वावृणीमहे।
१र २र ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
आत्वामनक्तु प्रयताहविष्मतीयजिष्ठम्बर्हिरासदे॥१†॥

हे "अग्ने!" "अग्निभिः" यष्टव्यैः सह "आ याहि" आगच्छ। तदर्थं "होतारं" देवानामाह्वातारं "त्वा" त्वां "वृणीमहे" त्वामागतं "प्रयता" अध्वर्यु-हस्ताभ्यां नियता "हविष्मती" घृतवती "यजिष्ठं" "बर्हिः" बर्हिषि "आसदे"‡। आसाद्य च "अनक्तु" सिञ्चतु ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ २ ३ १ २ ३ २
अच्छाहित्वासहसःसूनोअङ्गिरःस्रुचश्चरन्त्यध्वरे।
३ १र २र ३ १ २ ३ २ ३ १ २ ३ २
ऊर्जोनपातङ्घृतकेशमीमहेग्निंयज्ञेषुपूर्व्यम् ॥ २¶॥ ७

---

* ऊ० गा० ११प्र० १अ० १सा०।

† ऋ० वे० ६, ४, ३१, १।

‡ 'आसदे—आसादनार्थम्'—इति वि०।

¶ ऋ० वे० ६, ४, ३१, २।

हे "सहसः सूनो" बलस्य पुत्र! बलेन मथ्यमानत्वात्, हे "अङ्गिरः" अङ्गिरसां मध्ये मुख्य!* [अथवा अङ्गतिर्गति-कर्म्मा सर्वत्र गन्तः!] "त्वा" त्वाम् "अध्वरे" यागे "अच्छ" अभिप्राप्तुं "स्रुचः" "चरन्ति" गच्छन्ति। अतः "ऊर्जः" अन्नस्य "नपातं" नपातयितारं रक्षकं बलस्य वा नप्तारं† "घृतकेशं" प्रदीप्तकेशं‡ "पूर्व्यं" पुरातनं पूरकं वा "अग्निं" "यज्ञेषु" अस्मदीयेषु "ईमहे" स्तौमि॥ २॥ ७

१ ५र ४र ५ ४
॥नौधसम्॥ आ२३४। ग्नआयाह्वियि। ग्नायि
५ २र १र २ १ २ २ १
भायिः। होतारन्त्वा। वा३र्णीयिमा३हायि। आ२३
२ १ २ १२ १ २ ३ ५ १
त्वाम्। आनक्तु। प्रय। ता। हाविष्मा२ ३ ४तो। या
२ १ २ १ ५ ३ ५ १
२३जायि। ष्ठम्बर्हिरो२३४वा। सा२३४दे॥(१) या२३
५ र ४ ५ २ १ २ १ २
४। जिष्ठम्बर्हिरा। सादायि। यजिष्ठम्बा। हो३रासा
२ १ २ १ २र १२ १
३दायि। आ२३च्छा। हायित्वा। सह्। साः। नो

---

* 'अङ्गिरः—अङ्गानां रसभूतः जठरस्त्वमेव'—इति वि०।

† 'ऊर्जोनपातम्—अन्नानां पुत्रभूतम्, अन्नाहुत्या अग्निर्जायते तेन पुत्रः अथवा अन्नानां पवितारं रक्षितारमित्यर्थः'—इति वि०।

‡ 'घृतकेशं—केशभूता ज्वाला घृतेन वर्द्धते तस्माद् घृतकेशोऽग्निः तम्'—इति वि०।

२ ३ ५ १ २ १ २ १ ५
अङ्गा२३४यिराः। सू२३चाः। चारन्तियो २ ३ ४ वा।
३ ५ १ ५ ४ ५ २
ध्वा२३४रे ॥(२) सू२३४। चस्वरन्तिय। ध्वारायि। सु
१ २ १ २ २ १ २ १ र २
चस्वरा। तौ३आध्वा३रायि। ऊ२३र्ज्जो। नापातम्।
१ २ १ ३ ५ १ २ १
घृत। के। शामायिमा२३४हायि। आ२३ग्नीम्। या
र २ १ ५ ३ ५
ज्ञ पुपो२३४वा। वी२३४याम्(३) ॥ २ * ॥ [१]

२ र र २ १ र
॥ नैपातिथम्॥ अग्नआयाह्यग्निभा३यिरे। होता
२ र १ २ २ ३र ५ १र
रन्वा। वृणायिमहा३यि। हा। औहो२३४हा। आ
र १ १ २र १ ७ २ ३र
त्वामनक्तुप्रयता। हवायिष्मता२३यि। हा। औहो२
५ २ १ २ २ ३र ५ २
३४हा। यजायिष्ठाम्बा३। हा। औहो२३४हा। हा
३ ५र र ३ ५ २ र
२यिरा२३४औहोवा। सा२३४दे ॥(१) यजिष्ठम्बर्हिरास
२ १ २ १ २ २ ३र
दा३ए। याजिष्ठम्ब। र्हिरासदा३यि। हा। औहो२
५ १ र २ र १ २ १र २र १ ७
३ ४ हा। अच्छाहित्वासहसःसू। नोआङ्गिरा २ ३ः।

---

* ऊ० गा० ११प्र० १ख० २सा०।

२ ३र ५ २ १ २ २ ३र
हा । औहो२३४हा । सुचाश्वारा३ । हा । औहो२३

५ १ ३ ५र र ३ ५ २
४हा । तार२श्वा२२४औहोवा । ध्वा२३४रे ॥(२) सुचन्द्र

२ १ २ १ २ २ ३र
रन्त्यध्वरा३ए । सूचम्बर । तियाध्वरा३यि । हा । औ

५ २र१र र २ १२र १ ७
हो२३४हा । ऊर्ज्जोनपातङ्कृतके । शमायिमहा२३यि ।

२ ३र ५ २ १ २ २ ३३
हा । औहो२३४हा । अग्नायिंयाज्ञा३ । हा । औ

५ १ ३ ५र र ३
हो२३४हा । षू२पू२३४औहोवा । वा२३४

५
याम्(३) ॥ ४ * ॥ [२] ७

अच्छानइति प्रगाथात्मके चतुर्थ-सूक्ते—

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ २
अच्छानःशीरशोचिषङ्गिरोयन्तुदर्शतम् ।

१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
अच्छायज्ञासोनमसापुरूवसुम्पुरुप्रशस्तमूतये ॥१†॥

* ऊ० गा० १२प्र० ३अ० ४मा० ।

† ऋ० वे० ६, ५, १२, ५ ।

"अच्छ" अभिमुखं "यन्तु" गच्छन्तु "नः" अस्माकं "गिरः" स्तुतयः। कम्? "शीरशोचिषम्"* अयानशीलज्वालं वाग्निं "दर्शतम्" सर्वैर्दर्शनीयम्। तथा "यज्ञासः" यज्ञस्य अस्मदीया "नमसा" हविषा आज्यादि-लक्षणेन "अच्छ" अभिमुखं "यन्तु" गच्छन्तु। कीदृशम्? "पुरुवसुं" प्रभूत-धनं "पुरु-प्रशस्तं" बहुभिः सम्यक् स्तुतम्। किमर्थम्? "ऊतये" अस्माकं रक्षणाय॥ १॥

अथ द्वितीया।

३ २ ३ १र २र ३ १ २ ३ २ ३ १ २
अग्निꣳसूनुꣳसहसोजातवेदसन्दानायवार्य्याणाम्।

३ २उ ३ २ ३ २ ३ १र २र ३ १ २ ३ २
द्वितायोभूदमृतोमर्त्त्येष्वाहोतामन्द्रतमोविशि॥२†॥८

"यः" अग्निः "अमृतः" अमरण-धर्म्मा देवेषु भवति, सः "मर्त्त्येषु आ" [आकारश्चार्थे] "मर्त्त्येषु" मनुष्येषु च "अभूत्" अभवत्—इत्येवं "द्विता" द्वैधं भवति। देवेऽष्यमृतत्वमस्य प्रसिद्धम्। मनुष्येषु कीदृशोऽभूत्? उच्यते—"विशि" विक्षु यजमानरूपासु प्रजासु "होता" होम-निष्पादकः "मन्द्रतमः" मादयितृतमश्च भवति। तमच्छ यन्त्विति समन्वयः [अथवा 'यः' अमृतः 'द्विता' द्वित्वं द्वैधं द्विःप्रकारोऽभूत्। कथं मर्त्त्येषु सामान्येन तदाह—पाकादि-साधनो भवदित्येतत् प्रसिद्धम्

* 'दीप्तिशीलम्'—इति वि०।

† ऋ० वे० ६, ५, १२, ५।

'विश्वि' यजमानरूपायां तु 'होता' 'मन्द्रतमश्च' अभवदित्येवं हितम्] ॥ २ ॥ ८

५ र २ ४र ५ ४र ५ २ १
॥ कालेयम् ॥ अच्छाना३:शीरशोचिषाम्। गिरो
२ ३ २ १ २ ३र २ १ ३
यन्तू। दर्शता२३म्। अच्छायज्ञा३। सो२३४। नृम
४र ५र २ ३ ३ ३२ २ ५ ५
सापुरू। वा३सूम्। पुरूप्रशौ। वा३४३ओ२३४वा। स्त
५ २ ४ ५ ४र ५ २ १ २ १ २
मूप्तयायि ॥(१) पुरूप्रा३शस्तमूतयायि। पुरूप्रशा। स्त
३र २ १ २ ३ र २ १ ३ ४र र
मूतया२३यि। अग्निᳲहन्नू३म्। सा२३४। हसोजा
५र २ २ १र ३ २ २ ५ ४
तवे। दा३साम्। दानायवौ। वा३४३ओ२३४वा। रि
र र २ ४र ५ ४र ५र २र १ २
याप्णाम्॥(२) दानाया३वारियाणाम्। दानायवा।
र १ २ ३र र २ १ २ ४र
रियाणा२३म्। हितायोभू३त्। आ२३४। मृतोमर्त्ति
५र २ २ १र ३ २ २ ५ ४
योषू३वा। होतामन्द्रो। वा३४३ओ२३४वा। तमोप्नवि
४
शायि। होप्ई। डा(३) ॥ ३ * ॥ [१]

१ र र २ २
॥ आयन्तीयम् ॥ अच्छानःशीरशो१चायिषाम्। गि

* ऊ० गा० २१प्र० १ख० ३सा०।

१ १ र २१र २र १२र
रो२यन्तू२। दा२र्शीताम्। आच्छायज्ञासोनमसा।
१२ १२र१२र १ २ १ २
पुरूवा१ह्व२म्। पुरूप्रशस्तमूतये। पू२३रू। प्रशास्ता
२ १ ३२ १ ५ २
३म्। ऊम्। तया३। ओ२३४वा॥(१) पुरूप्रशस्तमू
२ १ १ १ १ ७
१तायायि। पुरू२प्रशा२। स्तमू२तायायि। आगि
२र१ २र र १ २ र १र२१र
ऌह्नुऌसहसोजा। तवायिदा१सा२म्। दानायवारि
२ र १ २ १ २ २ १ ३र२
याणाम्। दा२३ना। यावा३री। ऊम्। याणा३म्।
१ ५ २ र र. २ १ १
ओ२३४वा॥(२) दानायवारी१याणाम्। दाना२यवा
१ ७ २र १२र १
२। री२याणाम्। ह्वायितायोभद्मतोम। तियायि
२ १र र २ १ २र १ २ १
पू१वा२। होतामन्द्रतमोविशि। हो२३ता। मन्द्रा
२ २ १ ३ २ १ ५ ३ १ १ १
ता३माः। ऊम्। विशा३। ओ२३४वा। हे २ ३ ४
१
५(३)॥ ७ *॥ [२] ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चदशस्याध्यायस्य
द्वितीयः खण्डः॥ २ ॥

* ऊ० गा० २३प्र० ३ख० १सा०।

अथ तृतीय-खण्डे—

अदाभ्यइति तृचात्मके प्रथमे सूक्ते,

प्रथमा ।

१ २ ३१ ३ २ ३ १र २र
अदाभ्यःपुरएताविशामग्निर्मानुषीणाम् ।
२ ३ २३ २३ १ २
तूर्णीरथःसदानवः ॥ १ * ॥

"मानुषीणां" मनोजातानां "विशां" प्रजानां "पुरएता" सन्मार्ग-दर्शनेनानाग्रतो गन्ता, अतएव "तूर्णीः" तूर्णिताः† प्रजाः विदित-कर्म्मप्रवर्त्तनेनानुग्रहीतुं त्वरा-युक्ताः आलस्य-रहिताः "रथः" हविषां वहनाद्रथ-सदृशः "सदा" सर्वदा तत्कर्म्मणि "नवः" नूतनः पुनर्मथनादभिनवः, एवंविधोऽग्निः "अदाभ्यः" अहिंस्यः न केनापि तिरस्कार्यइत्यर्थः ॥ १ ॥

अथ द्वितीया ।

३ १र २र ३ १ २ ३ १ २ ३ १ २
अभिप्रयाꣳसिवाहसादाश्वाꣳअश्नोतिमर्त्त्यः ।
१ २ ३ १ २
क्षयम्पावकशोचिषः ॥ २ ‡ ॥

---

* ऋ० वे ३, १, ६, ५ ।

† 'तूर्णीः—त्वरितगामी'—इति वि० ।

‡ ऋ० वे० ३, १, १०, २ ।

"दाश्वान्" हविषां दाता "मर्त्त्यः" मनुष्यः यजमानः "वाहसा" हविषां वाहकेनाग्निना "प्रयांसि" अन्नानि "अभि अश्नोति" अभितः सर्वतः प्राप्नोति । किञ्च "पावक-शोचिषः" शोधकदीप्तेः अग्नेः सकाशात् "क्षयं" गृहं चाश्नोति ॥ २ ॥

अथ तृतीया ।

३ १र २र ३ २ ३ १ २ ३२ १ १२
साह्वान्विश्वा अभियुजः क्रतुर्देवानामम्नृक्तः ।
१ २ ३ १ २
अग्निस्तुविश्रवस्तमः ॥ ३* ॥ ९

"अभियुजः" अभियोक्त्रीः "विश्वाः" सेनाः "साह्वान्" सहमानः स्व-बलेन तिरस्कुर्वाणः अतएव "अमृक्तः" शत्रुभिरहिंसितः "देवानां" "क्रतुः" कर्त्ता हविः-प्रदानेन पोषकः† । एवभूतः "अग्निः" "तुविश्रवस्तमः" [तुवि-शब्दो बहु-वाची ( निघ० ३,१,२ ), श्रवः-शब्दोऽन्नवाची ( निघ० २,७,८ ) ] अतिशयेन बहुविधान्नोपेतो वर्त्तते यस्मादेवं तस्मादस्मानपि बहुविधान्नोपेतान् करोत्विति भावः ॥ ३ ॥ ९

१ र १ २ २
॥ संहितम् ॥ अदाभ्यःपुरः । आ२यिता । विशा
१ २ १र १ २
२म । आर२शीः । मानू२षायिणाम् । तू२३ र्णीः ।
१ ७ २ ५
रा२थाः । सदा २३ । हाउवा ३ । नार३४वाः ॥(१)

---

* ऋ० वे० ३,१,१० २ ।

† 'क्रतुः—यज्ञः'—इति वि० ।

२ १ २र १ १र १ २
अभिप्रयाꣳसि। वा२हसा। दाश्वा२ꣳ। आ२३श्नो।
१ १ २ १ ७
तिमा२त्तीयाः। व्वा२३याम्। पा२वा। कशो२३।
२ ५ १र १र २र
व्वाउवा३। चौ२३४षाः॥(२) साक्षान्विश्वाअ। भा२
२ २ १ २ १र १
यियुजाः। क्रतू२ः। दा२३यिवा। नामा२मार्त्ताः।
२ १ ७ २
आ२३गीः। तू२वायि। श्रवा२३। व्वाउवा३। ता२३
५
४माः(३)॥ ४ *॥ [१] ९

अथ भद्रोनोअग्निराहुत इति प्रगाथात्मके द्वितीयसूक्ते,

सैषा प्रथमा।

३ १ २ ३ १र २र ३ २ ३ १ २ १ १ २ ३ २
भद्रोनोअग्निराहुतोभद्रारातिःसुभगभद्रोअध्वरः।
३ १ ३ १र २र
भद्राउतप्रशस्तयः॥ १ †॥

"आहुतः" हविर्भिस्तर्पितः "अग्निः" "नः" अस्माकं "भद्रः" कल्याणः भवतु। हे "सुभग" शोभन-धनाग्ने! "भद्रा"

---

* ऊ० गा० ११प्र० १ख० ४सा०।

† ऋ० आ० १, १, २, ५ (१भा०२८२पृ०) = ६, १, ३३, ४ = ऋ० वे १५, ३८ ३९।

कल्याणी "रातिः" दानं चास्माकं भवतु। "भद्रः" कल्याणः "अध्वरः" यागश्च भवतु। "उत" अपिच "भद्राः" कल्याणाः "प्रशस्तयः" प्रशंसाः स्तुतयश्च भवन्तु॥ १ ॥

अथ द्वितीया।

३ १२ २२ ३ २ ३ १ २ ३ १ २ ३ २
भद्रम्मनःकृणुष्ववृत्रतूर्येयेनासमत्सुसासहिः।

१२ ३ १ २ ३ २ ३ १ १ ३१ २ ३ १ २
अवस्थिरातनुहिभूरिशर्द्धतांवनेमातेअभिष्टये ॥ २* ॥ १०

हे "अग्ने!" "वृत्रतूर्य्ये" सङ्ग्रामे "भद्रं" "मनः" "कृणुष्व" अस्माकं कुरु। "येन" मनसा त्वं "समत्सु" सङ्ग्रामेषु "सासहिः" भृशं शत्रूनभिभवसि। अपिच "शर्द्धताम्" अभिभवतां शत्रूणां "भूरि" भूरीणि बहुनि "स्थिरा" स्थिराणि दृढ़ान्यपि बलानि "अव तनुहि" पराजितानि कुरु। वयञ्च "अभिष्टिभिः" अन्वेषण-साधनैः हविर्भिः स्तोत्रैश्च† "ते" त्वां "वनेम" सम्भजेमहि [यद्वा, 'ते' तव प्रसादात् अभिष्टिभिः अभीष्टैः फलैः 'वनेम' सङ्गच्छेमहि]¶ ॥ २ ॥ १०

---

* ऋ० वे० ६, १, ३२, ५ = य० वे० १५, ३९-४०।

† "अभिष्टिभिः"—इति ऋ०-पाठः य०-पाठश्च।

¶ 'अभिष्टिभिरित्यन्यान्यवेदीय पाठमवलम्ब्यैवं व्याचष्टे। विवरणकारेणत्व यथायथं सामवेदीयमेव पाठमवलम्ब्य व्याख्यातम्; तथाहि—'अभिष्टये—अभिष्टिर्यज्ञः तस्मै अभिष्टये'—इति।

२ १र २ ४ ५ २ ३ ५ २
॥ सफम्॥ भद्रोनो३अग्निः। आहु२३४ताः। भ
१र २र १ १ २ ४ २ ५
द्रारातायिःह्व२। भगभाद्रो३आ३। ध्वा३२३४राः।
१ १ २ ४ २ ५
भद्राः। उताप्रा३शा३। स्ता३४५योई्चायि(१)॥५*॥[१]१०

अथाग्नेवाजस्येति तृतीय-तृचे,

प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २
अग्नेवाजस्यगोमतईशानःसहसोयहो।
३ १ २ ३ २ ३ १ २
अस्मेदेहिजातवेदोमहिश्रवः॥ १ †॥

हे "सहसः यहो" बलस्य पुत्र! "अग्ने!" "गोमतः" बहुभिर्गोभिर्युक्तस्य "वाजस्य" अन्नस्य "ईशानः" ईश्वरस्त्वमसि। अतः "अस्मे" अस्मासु हे "जातवेदः" जातधन! जातानां वेदितो वाग्ने! "महि" प्रभूतं "श्रवः" अन्नं "देहि" प्रयच्छ। [सहसोयहो—पराङ्गवद्भावात् "आमन्त्रितस्य च (८, १, १९)" —इति षष्ठ्यामन्त्रित-समुदायो निहन्यते। अस्मे—सुपां सु-लुक् (७, १, ३९)—इति सप्तम्याः शे-आदेशः॥ १॥

* ऊ० गा० ११प्र० १ख० ५सा०।

† छ० आ० २, १, १, ३, (१भा० २९३ प०) = ऋ० वे० १, ४, १७, ४ = य० १५, ३५।

अथ द्वितीया ।

१ २ ३ १र २र ३ १ ३ २ ३ १ २ ३ १
सइधानोवसुःकविरग्निरीडेन्योगिरा ।

१ २ ३ १ २
रेवदस्मभ्यम्पर्वणीकदीदिहि ॥ २ * ॥

"सः" अग्निः "इधानः" दीपन-शीलः "वसुः" निवासयिता सर्वेषां, "कविः" क्रान्त-दर्शनः मेधावी वा "गिरा" स्तोत्र-रूपया वाचा "ईडेन्यः" स्तोतव्यो भवति हे "पुर्वणीक" अनीकं मुखं पुरुभिः बह्वीभिः अनीक-स्थानीयाभिः ज्वालाभिः युक्ताग्ने ! "अस्मभ्य" "रेवत्" धन-युक्तमन्नं यथा भवति तथा "दीदिहि" दीप्यस्व [दीदेति छान्दसो दीप्ति-कर्मा] ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ २उ ३ १ २ ३ १र १र
क्षपोराजन्नुतत्मनाग्नेवस्तोरुतोषसः ।

१ २ ३ १ २ ३ १ २
सतिग्मजम्भरक्षसोदहप्रति ॥ ३ † ॥ ११

हे "राजन्" राजमान ! "अग्ने" ! "क्षपः" राक्षसादीन् स्वकीयैः पुरुषैर्बाधस्व । "उत" अपिच "त्मना" न केवल मन्यैरेव आत्मना च तान् बाधस्व । कदा ? इति चेत्, उच्यते— "वस्तोः" सर्वाण्यहानि‡ "उत" अपिच "उषसः" कालोपलक्षण-

* ऋ० वे० १, ५, २७, ५ = य० वे० १५, ३६ ।

† ऋ० वे० १, ५, २७, ६ = य० वे० १५, ३७ ।

‡ 'नक्तोः—गृहस्य उपद्रवकराः'—इति वि० ।

रात्रीश्च [अत्यन्तसंयोगे द्वितीया (२, ३, ४) सर्वेष्वहःसु सर्वासु रात्रिषु चेत्यर्थः] "हे तिग्मजम्भ" तीक्ष्ण-मुखाग्ने! "रक्षसः" राक्षसान् उक्त-प्रकारेण क्षपयित्वा स एव त्वं "प्रति दह" प्रत्येकं प्रतीत्य दह न किञ्चिद्दग्धव्यमित्युदास्वेत्यर्थः॥ ३॥ ११

२ १र २ ४ ५ २ ३ ५ २र
॥ पौष्कलम्॥ अग्नेवा३जस्य। गोमा२३४ताः। ई

१र २ १ २ ३ ५ २ १र र ७र
शानःसा। हसोया२३४चो। अस्मायिदेहायि। जा

३ २ १ ३ १ १ १ १
ता२वा२३४५यिदा६५६ः। मधिश्रवा२३४५ः(१)॥ ६*॥१]

१ र र र १ २र १र
॥ अध्यम्॥ अग्नेवाजा२स्य। गोमतीवा। ईशा

२ १ २ ३र १ १ २ १ २ र १र २र र १
नःसा। हसोयहो। अस्मायिदेहिजातवेदोम। हा२३

२ १र १ र
यि। अवाउवा। अधिया२॥(१) सहधानो२व। सु

१ २ १ २र १ २ १र २ १ २र १ २ १ २
ष्कवोवा। अगिरोडायि। नियोगिरा। रेवदस्मभ्यम्पु

र १ २ १र
र्वणीक। दा२३यि। दिद्दाउवा। प्रधिया२॥(२)

१ र र १ २ १र २ १ २ ३र २ १
क्षपोराजा२नु। तत्मनोवा। अग्नेवस्तोः। उतोषसाः।

---

* ऊ० गा० ११प्र० १ख० ६गा०।

२ १२र १ २
सतिग्मजम्भरचसोद। हा२३। प्रताउवा। प्रुधिया
१ २ १
२। ए२३धिया३४३। ओ२३४५ई। डा(३)॥ ७*॥ [२] ११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चदशस्याध्यायस्य तृतीयः खण्डः॥ ३॥

---

अथ चतुर्थ-खण्डे—

विशोविशोवोअतिथिमिति तृचात्मके प्रथमे सूक्ते।

प्रथमा।

१ २ २ १ २ ३ १ १ ३ २
विशोविशोवोअतिथिंवाजयन्तःपुरुप्रियम्।
३ २ १ २ ३ १ २ ३ २ ३ २ ३ १ २
अग्निंवोदुर्यंवचःस्तुषेशूषस्यमन्मभिः॥ १ †॥

हे ऋत्विजो यजमानाश्च "वः" यूयं "वाजयन्तः" अन्नमिच्छन्तः "विशः विशः" सर्वस्याः प्रजायाः "अतिथिं" पूज्यं "पुरुप्रियं" बहु-प्रियम् "अग्निं" स्तुत्वा परिचरेति शेषः। अहञ्च "वः" युष्मदर्थं "दुर्यं" गृह-हितम् अग्निं "वचः" अनु "स्तुषे" स्तौमि "शूषस्य" बलस्य लाभार्थकैः साधनैः "मन्मभिः" मननीयैः स्तोत्रैः॥ १॥

---

* ऊ० गा० ११प्र० १खं० ७सा०।

† ऋ० सा० १, २, ४, ७ ( १भा० २४३ पृ० ) = ऋ० वे० ६, ५, २१, १।

अथ द्वितीया।

१२ ३१२ ३ १ २ ३ २२ ३ १ २
यञ्जनासोहविष्मन्तोमित्रन्नसर्पिरासुतिम्।

२ ३ २ ३ १ २
प्रशꣳसन्तिप्रशस्तिभिः॥ २ * ॥

"यम्" अग्निं "जनासः" जनाः यजमानाः "हविष्मन्तः" सन्तः "मित्रं न" मित्रमिव सखायमिव वा "सर्पिरासुतिं" सर्पि रासूयते हूयते यस्मिन् तादृशं "प्रशंसन्ति" स्तुवन्ति "प्रशस्तिभिः" ॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १ ३ २ ३ १ २
पन्याꣳसञ्जातवेदसंयोदेवतात्युद्यता।

३ १२ २२ ३ १
हव्यान्यैरयद्दिवि॥ ३ † ॥ १२

"पन्यांसम्" अतिशयेन स्तोतारं साधुक्ततमिति यजमानं स्तुवन्तं "जातवेदसं" जातधनं स्तुमइति वाक्य-शेषः। "यः" अग्निः "देवतातिः" यज्ञे "उद्यता" उद्यतानि "हव्यानि" हवींषि "दिवि" "ऐरयत्" प्रेरयति दिवि देवेभ्यः॥ ३ ॥ १२

---

* ऋ॰ वे॰ ६, ५, २१, २।

† ऋ॰ वे॰ ६, ५, २१, ३।

३ २ २ ४ २ ५
॥ श्यावाश्वम् ॥ विशो३१। वा ३ यिशे। वोअ।
२ ४ ५ १ २ १
ता३यिथिम्। एहिया। वा। जयन्तःपुरू। प्रियार
१र १र २ ४ ५
म्। एहियार। अग्निंवोदुरो३याइम्। वा२३४चाः।
२र १र र १र २ ४ २
षेहा२यि। एहियार। स्तुषेशूषास्याइमा३। न्मा३४
५
५भोईहायि(१) ॥ ८ * ॥ [१]

२ र र २
॥ आभीगवम् ॥ विशोविशोवो१अतायिथायिम्।
१र २ १ १ २ १ २र १ २
वाजय। तःपू२३रू। ऊम्मा२१५२। प्रियमग्निंवोदुर्य्यं
२१ १११११ १ २ २ १ २
वचा२३४५ः। स्तुषा३उवा। शू२षा। स्या२३मा। न्म
१ ४ ५ २ १ र २
भायिः। औ२३होवा ॥(१) स्तुषेशूषस्यमा१न्माभायिः।
१ र र २ १ र २ १
यज्ञना। सोहा२३वा। ऊम्मा२१५२। अन्तोमित्रन्न
२ १ र २ ३ ११११ १ २ २ २
सर्यि रातुना२३४५यिम्। प्राशा३उवा। सा२न्तायि।
२ १ ४ ५ २
प्रा२३शा। स्तिभायिः। औ२३होवा ॥(२) प्रशंसन्ति

* ऊ० गा० ११प्र० १ख० ८सा०।

२ र र २ १
प्रश१स्तायिभायिः । पन्याꣳसम् । जाता२३वा । ऊ

१ र २ र १ १र १ र ३ १ १ १ १ १ १ २ २
र्म्मा२१ऽ२ । दसंयोदेवतात्युद्यता२३४५ । ह्वाव्या३उवा ।

१ २ १ १ ४ ५ ४
ना२श्रायि । रा२३यात् । दिवा । औ३होवा । हो

५ई । डा(३) ॥ ९* ॥ [२]

४ ४ १ ४
॥ यज्ञायज्ञीयम् ॥ विश्नोऽ५वि । श्नो३वो३अतायि

५ १ २ १ १ २ १
र्थायिम । वाजयन्ताः । पू३रुप्रो३याम् । अग्ना२यिं

१ २ १ १ २ १र र
वः । दुरो२३याम् । ऊम्मायि । वा३चाः । स्तुषेशूष

३ २ १ २ १र र
स्यमा३न्मभाउ ॥(१) स्तुषायि । शूषस्यमन्मभिर्य्यञ्जना

२ १ २ २ १ १
सो । ह्वा३वायियमा३न्ताः । मित्रा२न्न । सर्प्या२३यि

२ १ २ २ १ ३
रा । ऊम्मायि । ह्व३तायिम् । प्राश्नꣳसन्तिप्रश्ना२स्ति

२ १ २ १ र २
भाउ ॥(२) प्राश्ना । सन्तिप्रशस्तिभःपन्याꣳसञ्जा । ता

---

* ऊ० गा० ११०प्र० १ख० ९सा० ।

१ २ २ १ र १ र २ १
इवायिदा३साम्। योदे२व। ताता२३ऊ। ऊम्मायि।
१ २ १ र र ॥ ३ २
याइता। हाव्यान्यैरवा२ह्विवाउ(३) ॥ १० * ॥ [३]
५ ३ १ ४र ५
॥ गौरीवितम् ॥ विश्वः। विश्वो३। वोअतिथायिम्।
१र १ र२ ४
वाजयन्तःपुरुप्रिया२३म्। आग्निंवोदू३१२३। रियाप्
१ र र२ ४ ५ ४ ५
५वचाः। स्तुषेशूर्पा३१२३। स्यमोवा। न्मा५भोर्इचा
यि(१) ॥ २ † ॥ [४] १२

अथ द्वितीय-तृचे—

प्रथमा।

१ १ ३ २ ३ १ २ ३ १ ३ २
समिद्धमग्निꣳसमिधागिरागृणे
१ २ ३ २ ३ १ २ ३ २ ३ १
शुचिम्पावकम्पुरोअध्वरेध्रुवम्।
२ ३ १ २ ३ १ २ ३ १
विप्रꣳहोतारम्पुरुवारमद्रुहं
१ २ ३ १ २ ३ १ २
कविꣳसुम्नैरीमहेजातवेदसम् ॥ १ ‡ ॥

---

* ऊ० गा० ११प्र० १अ० १०गा०।

† ऊ० गा० १८प्र० १अ० १गा०।

‡ ऋ० वे० ४, ५, ११, २।

"समिद्ध" सम्यग्दीप्तम् "अग्निं" "समिधा" समिन्धन-हेतु-भूततया "गिरा" स्तुत्या "गृणे" अहं स्तौमि [यद्वा, 'समिधा' समिद्भिर्दीप्तिभिः 'समिद्धं' सम्यक् दीप्तम्]। अपिच "शुचिं" स्वयं शुद्धं "पावकं" सर्वेषां शोधकं "ध्रुवं" निश्चलं तमग्निम "अध्वरे" यज्ञे "पुरः" करोमीति शेषः। तथा "विप्रं" मेधाविनं "होतारं" देवानामाह्वातारं "पुरुवारं" बहुभिर्वरणीयम्* "अद्रुहम्" अद्रोग्धारं सर्वेषा मनुकूलं "कविं" क्रान्त-दर्शनं "जातवेदसं" जातानां वेदितारमग्निं "सुम्नैः" सुखकरैः स्तोत्रैः "ईमहे" सम्भजामहे [यद्वा, द्वितीयार्थे तृतीया (३, १, ८५)। सुम्नानि धनानि, ईमहे याचामहइति ॥ १ ॥

अथ द्वितीया।

२ १ १ २ ३ १ २ ३ १ २
त्वान्दूतमग्नेअमृतंयुगेयुगे
३ १ २ २ १र २र
हव्यवाहन्दधिरेपायुमीड्यम्।
३ १ २ १ १ २ ३ १ २ ३ २
देवासश्चमर्त्तासश्चजागृविंविभुं
२ २ ३ १ २ ३ १ २
विश्पतिन्नमसानिषेदिरे ॥ २ † ॥

---

* 'पुरुवारं—पुरुवालं, बहुभिर्वालैर्युक्तम्,—इति वि०।
† ऋ० वे० ४, ५, १८, ३।

हे "अग्ने!" "त्वां" "देवासः" देवाश्च "मर्त्यासः" मनुष्याश्च "दूतं" "दधिरे" विदधिरे कृतवन्तः। कीदृशं त्वाम्? "अमृतम्" अमरणम्, "युगे युगे" काले काले तद्यागानुष्ठान-समये "हव्यवाहं" हविषां हव्यानां वोढारं "पायुं" पालयितारम्* "ईड्यं" स्तुत्यम्। अपिच ते उभयविधाः "जागृविं" जागरणशीलं† "विभुं" व्याप्तं विश्पतिं विशां प्रजानां पालयितारम् अग्निं "नमसा" हविर्लक्षणेनान्नेन नमस्कारेण वा "निषेदिरे" उपसेदिरे ॥ २ ॥

अथ तृतीया।

३ १ १    ३ २ १    २ २ ३ २
विभूषन्नग्नउभयाँऽअनुव्रता

३ २ ३ २ ३    १ २ ३ १ २
दूतोदेवानाँरजसीसमीयसे।

१ २ ३ १    २ ३ २    ३ १२
यत्तेधीतिँसुमतिमावृणीमहे

१२    ३ १ २    १ १ २
धस्मानस्त्रिवरूथःशिवोभव॥ ३ ‡ ॥ १३

---

* पायुं—पानीयं सोमम्—इति वि०।

† 'जागृविम्—यमर्हद्द्याश्चित्यैव यो जागर्त्ति स जागृविः तम् जागृविम्—इति वि०।

‡ ऋ० वे० ४, ४, १२, ४।

हे "अग्ने!" उभयान् "उभयविधान् देवान् मनुष्यांश्च*" "विभूषयन्" अलङ्कुर्वन् त्वम् "अनुव्रता" व्रतान्यनु † "व्रतेषु" कर्मसु यागेषु "देवानां" "दूतः" सन् "रजसी" द्यावापृथिव्यौ "समीयसे" सञ्चरसि देवानां नेतुं द्युलोकं गच्छसि हवींषि भजामहे। "अध" अतः कारणात् "त्रिवरूथः" त्रिस्थानस्त्वं‡ "नः" अस्माकं "शिवः" सुखकरः "भव" "स्म" [—इति पदपूरणम्]॥ ३॥ १३

४ ३ ४ २
॥ यज्ञायज्ञीयम्॥ समाऽ५यिद्धम्। आ३ग्ना३यिं९
४ ५ १ २ २ २ २ १
समिधा। गायिरागृणेश्शुचिम्पावकम्पुरोश्रा। ध्वा३रा
२ २ १ १२ २ २
यिध्र३वाम्। विप्रा२९होतारम्पुरुवारमद्रु। हक्का२३
२ १ २ २ १ २ २
वीम्। ऊम्मायि। ह्व३म्नाई:। आयिमचेजातवा२यि
२ २ २ १२ २ २ २
दसाउ॥(१) सान्त्वाम्। दूतमग्ने अमृतम्पुगेयुगेहव्यवा
२ २ १ २ २ १२ १ २
हन्दाधिरेपा। यू३मायिडा३याम्। देवा२सश्चमर्त्तास
२ २ १ २ २
श्चजागृ। विंका२३यिभूम्। ऊम्मायि। वा३यिष्पा।

* 'उभयान्—ऋत्विजो मनुष्यांश्च'—इति वि०।

† 'अनुव्रताः—शरणं प्रपन्नाः'—इति वि०।

‡ 'त्रिवरूथः—त्रिस्थानम् गार्हपत्यादि अथवा भूर्लोकादि'—इति वि०।

१ २ ३२ १ २ १२
तायिन्नमसानिषा२यिदिराउ ॥(२) रायिवायि। भूषन्न
२ २ २२२२२ ३ १ २
ग्नाउभयां अनुव्रतादूतोदेवानां रजसी। सा३ मीया ३.
२ १ २१ २ २ २
सायि। यत्ते२धीतिं सुमतिमावृणीम। हुत्रा२३धा।
१ १ २ १ २ ३२ १
ऊम्नायि। स्त्रा३नाः। त्रायिवरूथःशिवो२भवाउ। वा
११
३४५(३) ॥ ११* ॥ [१]

२१ ३२
॥ कावम् ॥ समोवा। त्वमग्निं समिधा। गिरा
१ १ २ २ ३२१
गार्णा२यि। शुचिम्पावकम्पुरोत्रा। ध्वरेध्रूवा२म्।
२ २ २ १ १२ ४५
विप्रं होतारम्पुरुवा। रमद्र्हा२३म्। कावी३ं सुम्ना
१२ १ १२ ४
यिः। ईमहायिजा२३। तावा३यिदा५सा६५६म् ॥(१)
२१ २ २ १२१ १ २
तुवोवा। दूतमग्नेश्रमृताम्। युगेयूगा२यि। हव्यवा
२ २२१ १२२ २
हन्दधिरेपा। युमीडाया२म्। देवासश्चमर्त्तासाः। च
२१ १ २ ४ ५ २ १
जागृवा२३यिम्। वायिभू३वायिश्वा। तिन्नमासा२३।

* ऊ० गा० ११०प्र० १ख० ११सा०।

१ २ ४ १ १
नायिषा३यिदा५यिरा६५६यि ॥(२) विभोवा। षन्नग्नउ

२ १ १२ २ २ २ २ २ २
भयाए। अनुव्राता२। दूतोदेवानाएरजसी। समी

१ १२२ २२१
यासा२यि। यत्तेधीतिएसुमतिमा। वृणीमाहा२३यि।

१ २ ४ ५ १ २ ४
आधा३स्माना:। त्रिवरूथा२३:। शायिवोशभा५वा ६ ५

६(३) ॥ १२* ॥ [२] १३

अथ तृतीय-सूक्ते—प्रथमा।

१२ ३ २३ २ ३१ २ ३ १ ३
उपत्वाजामयोगिरोदेदिशतीर्हविष्कृतः।

३ १२ १२
वायोरनीके अस्थिरन् ॥ १ † ॥

हे अग्ने! "हविष्कृतः" यजमानार्थं "गिरः" स्तुतयः "जामयः" स्वसारइव "देदिशतीः" तव गुणान् दिशन्त्यः "त्वा" त्वाम् "उप अस्थिरन्" उपतिष्ठन्ते "वायोरनीके" समीपे त्वां समेधत्यः अस्थिरंश्च ॥ १ ॥

---

* ऊ० गा० ११प्र० १ख० १२गा०।

† ऋ० सा० १, १, १, ३ (१भा० ११३ पृ०) = ऋ० वे० ६, ७, ११, ३।

अथ द्वितीया।

१ २ ३ १र २र ३ २ ३ १र २र
यस्य त्रिधात्ववृतम्बर्हिस्तस्थावसन्दिनम्।
१ २ ३ १ २ ३ १
आपश्चिन्निदधापदम्*॥ २॥

"यस्य" अग्नेः "त्रिधातु" त्रिपर्व "अवृतम्" अनावृतं च "असन्दिनम्" अबद्धञ्च स्तरण-काले बर्हिरबद्धं भवति "बर्हिः" "तस्थौ" आसदनार्थं तिष्ठतीत्यर्थः॥ २॥

अथ तृतीया।

३ २ ३ १ २ ३ १र २र ३ १ २
पदन्देवस्य मीढुषोनाधृष्टाभिरूतिभिः।
३ १र २र ३ २
भद्रा सूर्य इवोपदृक्॥ ३ ‡॥ १४

"मीढुषः" कामानां सेक्तुः "देवस्य" द्योतमानस्याग्नेः पदं स्थानं "धृष्टभिः" शत्रुभिः अबाधिताभिः "ऊतिभिः" रक्षाभिः भजनीयं भजतीत्यर्थः। तथैवास्य "उप दृक्" उपदृष्टिरपि "सूर्य्य इव" यथा सूर्य्यः तद्वत् "भद्रा" मनुष्यैर्भजनीया भवति॥ ३॥१४

---

* ऋ० वे० ६, ७, ११, ४।

† 'त्रिधातु—स्वर्ण-रजत-ताम्रैः त्रिभि र्धातुभिः यद्वा वा त्रिधातु इति पदपूरणः' —इति वि०।

‡ ऋ० वे० ६, ७, ११, ५।

॥ वारवन्तीयोत्तरम् ॥ उपत्वाजा। औहोहायि।
मायोगार२३४यिराः। देटायिशा२३४हा। तीर्हविष्का
३४। औहोवा। इहा२३४हायि। उक्क्वा२३४र्त्ताः।
वायोर। नायिक्ष्त्रस्था३४। औहोवा। इहा२३४हा
यि। औहो३१२३४रान्। एहियाइहा ॥(१) यस्यत्रिधा
औहोहायि। तूआवा२३४र्त्तम्। बर्हायिस्ता२३४हा
यि। स्थावसन्दा३४। औहोवा। इहा२३४हायि। उ
क्क्वा२३४नाम्। आपश्चित्। नायिदधापा३४। औ
होवा। इहा२३४हायि। औहो३१२३४दाम्। एहिया
ईहा ॥(२) पदन्देवाऔहोहायि। स्यामायिढू२३४हा।
अनाधा२३४हा। छाभिह्रुता३४औहोवा। इहा२३४हा
हायि। उक्क्वा२३४भीः। भद्राह। य्यार्दूवोपा३४औ

४र ५   १ ३   ५   ३र २   ५र

होवा। इहा२३४हायि। औहो३१२३४हुक्। एहिया

५   ४

इहा। होश्ई। डा(३) ॥ १३ * ॥ [१] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चदशस्याध्यायस्य
चतुर्थः खण्डः* ॥ ४ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १५ ॥

॥ इति सप्तमस्य द्वितीयोऽर्द्धप्रपाठकः‡ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्ग-प्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे
उत्तराग्रन्थे पञ्चदशोऽध्यायः ॥ १५ ॥

---

* ऊ० गा० ११प्र० १अ० १३सा० ।

† 'समाप्ताश्चाग्निष्टुतः विष्टतो मध्ये * * * ।'—इति वि० ।

‡ 'सप्तमस्य द्वितीयोऽध्यायः समाप्तः'—इति वि० ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १६ ॥

## ॥ अथ षोड़शोऽध्यायआरभ्यते* ॥

तत्र,

प्रथमे खण्डे—

अभित्वापूर्वपीतयइति प्रगाथात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ १ २ ३१ २ ३ २ ३ १ २ ३ १ २
अभित्वापूर्वपीतयइन्द्रस्तोमेभिरायवः।
३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
समीचीनासऋभवःसमस्वरन्रुद्रागृणन्तपूर्व्यम् ॥१†॥

हे "इन्द्र!" "आयवः" मनुष्याः स्तोतारः "स्तोमेभिः" स्तोत्रैः "त्वा" त्वाम् अभिष्टुवन्ति। किमर्थम्? "पूर्वपीतये" सर्वेभ्यो देवेभ्यः पूर्वं प्रथमतएव सोमस्य पीतये पानाय [सवन-मुखे हि चमसगणैरिव सदस्येव सोमो हूयते] तथा "समीचीनासः" सम्मताः "ऋभवः" [प्रथम-वाचकेन शब्देन

* 'इदानीं सर्वस्यारम्भ, पुनश्चातुर्मास्यानि'—इति वि०।

† छ० आ० ३, २, २, ४ (१भा० ५२९ पृ०) = ऋ० वे० ५, ७, १९, १।

त्वयोऽप्युपलच्यन्ते ] ऋभुर्विभ्वावाज इत्येते "समस्वरन्" त्वामेव सम्यगस्तुवन् [ स्वृ शब्दोपतापयोः(भ्वा०प०)] "रुद्राः" रुद्रपुत्रा मरुतश्च"पूर्व्यम्" पुरातनं वृद्धं त्वामेव "गृणन्त" अभ्यस्तुवन् वृत्र-बध-समये 'प्रहर भगवो जहि वीरं जयस्व'—इत्येवं रूपया वाचा त्वां स्तुतवन्त इत्यर्थः ॥ १ ॥

अथ द्वितीया।

३ १२ २र ३ १ ३ २ ३ १ २ ३ २ ३ १ २
अस्येदिन्द्रोवावृधेवृष्ण्यꣳशवोमदेसुतस्यविष्णवि।
३ १र २र ३ १ २ ३ १र २र ३ १ २
अद्यातमस्यमहिमानमायवोनुष्टुवन्तिपूर्वथा ॥ २*॥ १

"अस्येत्" अस्यैव † यजमानस्य "वृष्ण्यं" वृषत्वं वीर्यं "शवः" बलं च "इन्द्रः" "वावृधे" वर्द्धयति "सुतस्य" अभि-सुतस्य सोमस्य पानेन "विष्णवि" कृत्स्न-देहस्य व्यापके "मदे" हर्षे सति तस्यैव यजमानस्य बलं वर्द्धयतीत्यर्थः। "अद्य" अस्मिन् काले "अस्य" इन्द्रस्य "तम्" उक्तगुणं "महिमानं" महत्त्वम् "आयवः" मनुष्याः ‡ "अनु ष्टुवन्ति" तस्यानुपूर्वेण स्तुवन्ति, "पूर्वथा" [पूर्वशब्दादिवार्थे "प्रत्न"पूर्व (४, ३, १११) इत्यादिना था-प्रत्ययः] यथा पूर्वस्मिन् काले अस्तुवन् एव मिदानीमपि तेनैव क्रमेणैव स्तुवन्तीत्यर्थः ॥ १ ॥ १

* ऋ० वे० ५, ७, १९, ३।

† 'इत्—इति पदपूरणः'—इति वि०।

‡ 'आयवः—ऋत्विग्यजमानौ'—इति वि०

४ ३ ४र र १ ६र ५ र
॥ वषट्कारणिधनम्॥ अभित्वापूर्वपीतये। अभि
२ ४र ५ ४र ५ २ र र १ ७ १
त्वा३पूर्वपीतयायि। इन्द्रस्तोमेभी३रायवा २ः। भिरा
२ १र ऽ २ र र र १
या१वार३ः। ओमो३वा। समीचीनासऋभवःसा३मा
७ १ २ १र ऽ २ र
स्वरा २न्। समास्वा१रा२३न्। ओमो३वा। रुद्रागृ
१ ७ १ २ ३
णन्ता३पूर्विंया २म्। तपूर्वा१या२३म्। ओ २। षा२३
५र र ३ ३र ४ ३ ४र ५ र २ ४
४औहोवा॥(१) रुद्रागृणन्तपूर्विंयम्। रुद्रागा ३ णन्तपू
५ २ र १ ७ १ २
र्विंयाम्। रुद्रागृणन्ता३पूर्विंया २म्। तपूर्वा१या२३म्।
१र ऽ २ र र र र १ ७
ओमो३वा। अस्येदिन्द्रोवावृधेवृष्णी३याꣳशवा २ः।
१ २ १र ऽ २ र १
ष्णियाꣳशा१वार३ः। ओमो ३ वा। मदेसुतस्या३वा
७ १ २ १र
यिष्णवा २यि। स्यवायिष्णा१वा२३यि। ओम्। ओ
२ ५र र ३ ४र ३ ४ ३ ५ ५
२। वा२३४। औहोवा॥(२) मदेसुतस्यविष्णवि। म
र २ ४ ५ ४ ५ २ र १ ७
दे३तस्यविष्णवायि। मदेसुतस्या३वायिष्णवा २यि।
१ २ १र ऽ २ र
स्यवायिष्णा१वा२३यि। ओमो३वा। अद्यातमस्यमहि

मानाऽमायवा२ः। नमाया१वा२३ः। ओमो२वा। अ
नुष्टुवन्तीऽपूर्वथा२। तिपूर्वा१था२३। ओम्। ओ२।
वा२३४औहोवा। ऊ२३४पा(३) ॥ १६ * ॥ [१]

॥ कण्वरथन्तरम् ॥ आभित्वापूर्व्यपीतयायि। इन्द्र
स्तोमायि। भी३रायाऽवाः। समीचीनासऋभवःसम
स्वरा२३४नैहो। रुद्रागा२३४र्णा। तपू ३ आउवा२ ३।
ए३। वियमा ॥(१) रुद्रागृणतपूर्वियाम्। आ३स्येदा
इयिन्द्राः। वावृधेवृष्णियᳪ्शवा२३४ऐहो। मदे२३४
ता। स्त्रवा३१उवा२३। ए३। ष्णविया ॥(२) मादेसु
तस्यविष्णवायि। आ३द्याता३मा। स्यमहिमानमायवा
२३४ऐहो। अनुष्टू२३४वा। तिपू३आउवा२३। ए३र्वथ
आ(३) ॥ १६ † ॥ [२] १

---

* ऊ० गा० ११प्र० १ख० १६सा०। † ऊ० गा० १२प्र० १ख० १६सा०।

प्रवामर्चन्त्युक्थिनइति चतुर्ऋचं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ २
प्रवामर्चन्त्युक्थिनोनीथाविदोजरितारः ।
१ २ ३ १ ३ १ २
इन्द्राग्नीइषआवृणे ॥ १ * ॥

हे "इन्द्राग्नी !" "उक्थिनः" [उक्थं शस्त्रं तद्वन्तः]शस्त्रिणः होत्रादयः "वां" युवां प्रार्च्चन्ति—इह कर्म्मणि स्तुतिरूपाभि र्वाग्भिः पूजयन्ति । तथा "नीथाविदः" स्तोत्राभिज्ञाः साम,ज्ञान-कुशला "जरितारः" स्तोतारः उद्गात्रादयः अभिलषित-फला-वाप्तये युवामर्च्चन्ति । अहमपि "इषः" अन्नस्य लाभार्थम् "इन्द्राग्नी" युवाम् "आ वृणे" सर्व्वतः सम्भजे पूजयामीत्यर्थः ॥१॥

अथ द्वितीया ।

१ २ ३ १२ २र ३ १ २
इन्द्राग्नीनवतिम्पुरोदासपत्नीरधूनुतम् ।
३ १र २र ३ १ २
साकमेकेनकर्म्मणा ॥ २ † ॥

हे "इन्द्राग्नी !" "दासपत्नीः" दासयन्ति उपक्षयन्तीति दासाः उपक्षयितारः शत्रवः, ते पतयः पालकाः यासां ता दासपत्नीः "नवतिं" नवति-सङ्ख्याकाः "पुरः" एवंविधाः शत्रु-

* अत्रैव पुनः ८, २, १७, २ = ऋ०वे० ३, १, १२ १

† अत्रैव पुनः ८, २, १७, ३ = ऋ० वे० ३, १,१२, २।

पुरो: "एकेन कर्मणा" एकेनैवोद्योगेन युवां "साकं" सह युगपत् "अधूनुतम्" अकम्पयतं, ताविन्द्राग्नी आह्वयामीति शेषः॥१॥

अथ तृतीया।

१ २ ३ १ १ ३ २उ ३१२ ३ १ २
इन्द्राग्नीअपसस्पर्युपप्रयन्तिधीतयः।

३ १ १ ३ २ १ २
ऋतस्यपथ्याऽ३अनु॥ ३ *॥

हे "इन्द्राग्नी!" "धीतयः" सोमस्य धातारः पातारो होत्रादयः "ऋतस्य" कर्म-फलस्य "पथ्याः" पथः मार्गान् "अनु" लक्षीकृत्य "अपसः" अस्माभिः क्रियमाणस्य परितः सर्वतः समीपे "पर्युप" "प्र यन्ति" प्रकर्षेण वर्त्तन्ते अतः सोमपानार्थं युवामागच्छतमिति भावः [यद्वा,'धीतयः' 'ऋतस्य' यज्ञस्य 'पथः' मार्गान् 'अनु' लक्षीकृत्य 'अपसः' कर्मणः 'परि' परितः 'उप प्र यन्ति' प्रवर्त्तन्ते, अतः स्तोतव्यतया युवामागच्छतामिति॥ ३॥

अथ चतुर्थी।

१ २ ३ १ २ ३ १ २ ३ १ २
इन्द्राग्नीतविषाणिवाꣳसधस्थानिप्रयाꣳसिच।

३ ५ ३ १ २ ३ २
युवोरप्तुर्यꣳहितम्॥ ४ †॥ २

---

* अत्रैव पुनः ८, २, १४, २ = ऋ० वे० ३, १, १२, ३।

† अत्रैव पुनः ८, २, १४, ३ = ऋ० वे० ३, १, १२, ४।

हे इन्द्राग्नी! "वां" युवयोः "तविषाणि" बलानि "प्रयांसि अन्नानि* "च" "सधस्थानि" सहस्थितानि परस्परमवियुज्य वर्त्तन्ते। तथा "असूर्य्यं" वृष्टिधारायाः प्रेरकं त्वं "युवोः" युवयोरेव "हितं" निहितं वर्त्तन्ते तस्मात् सोमपान प्रभृतिषु सर्व्वकर्मसु इन्द्राग्न्योः सहैव वर्त्तनमिति भावः [सधस्थानि— ष्ठा गति-निवृत्तौ च (भ्वा० प०) "आतोऽनुपसर्गे कः (३,२,३)" "सधमादस्थयोश्छन्दसि (६, ३, ९६)—इति इस्य सधादेशः ॥ ४ ॥ २

अथ शग्ध्यूष्विति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

३ २  १ २  ३ १ २ १ २  ३ १ २
शग्ध्यू३ऽ२षुशचीपतइन्द्रविश्वाभिरूतिभिः।
१ २ ३ १ २  ३२ ३ १ २  ३ २ ३ १ २  ३ १ २
भगन्नहित्वायशसंवसुविदमनुशूरचरामसि ॥१†॥

हे "शचीपते!" "इन्द्र!" "शग्धि" "विश्वाभिः" सर्वाभिः "ऊतिभिः" मरुद्भिः सह। हे "शूर हे वीर! "भगं न" भाग्यमिव "यशसं" यशस्विनं "वसुविदं" धनस्य लम्भकं "त्वा" त्वाम् "अनु चरामसि" अनुचरामः परिचरामइत्यर्थः ॥ १ ॥

---

* 'प्रयांसि—प्रकर्षेण पातव्यान्यन्नानि यज्ञगृहाणि'—इति वि०।

† छ० आ० ३,२,१,(२आ० ५.२१ पृ०) = छ० वे० ६, ५, १५-५।

अथ द्वितीया।

२ १र १र २ १र २र ३ १ १ ३ १ २
पौरो अश्वस्य पुरुकृद्गवामस्युत्सोदेव हिरण्ययः।
२ ३ १र २र ३ १ २ ३ २उ ३ २ ३ १र १र
नकिर्हि दानम्परिमर्द्धिषत्त्वे यद्यद्यामि तदाभर॥ २*॥२

हे इन्द्र। त्वम् "अश्वस्य" "पौरः" पूरयिता† "असि" भवसि। तथा गवां "पुरुकृत्" बहुकर्त्तासि। हे "देव" "हिरण्ययः" हिरण्मय-शरीरस्त्वम् "उत्सः" उत्स-सदृशोऽसि। हे इन्द्र "त्वे" त्वयि वर्त्तमाने "दानम्" अस्मद्विषये देयं धनं वा "न किर् हि परि मर्द्धिषत्" न कश्चित् हिनस्ति। अतो "यद्य यामि" तत्तदाभर मह्यम्॥ २॥ ३

१ र र र १
॥हारायणम्॥ अग्ध्यू३ औहो २इ शचीपतायि। आ
र र २ २ १र
यिन्द्रविश्वाभिरूतिभिः। भगान्ना३ही। त्वायशसाम्।
२ १ १ १ र २
वह्र३हायि। वायिदा२म्। अनुशूरचरोवा३ओ२३४
४ ४ ५ १ र र र १
वा। मा५सो६हायि॥(१) अनुशूरौहो२यिचरामसा
र र र २ २ १
यि। आनुशूरचरामसि। पौरो आ३श्वा। स्यपुरुकृत्।

* ऋ० वे० ६, ४, २१।

† 'पौरः—पुरो भवः पौरः'—इति वि०।

गवा३ऽहायि । आसा२यि । उत्सोदेवहिरोवा३ओ२३४वा । एा५योऽहायि ॥(२) उत्सोदेवोहो२यिहिरण्ययाः । ऊत्सोदेवहिरण्ययः । नकायिर्हा३यिदा । नम्मरिमा । धिषा३हायि । तूवा२यि । यद्याामितदोवा३ओ२३४वा । भा५रो६हायि(३) ॥ १८ * ॥ [१]

॥ अभीवर्त्तम् ॥ श्रग्धा३ऊ३षुग्रचोपतोवा । आयिन्द्रविश्वा । भिहूता१यिभा२यिः । भागन्नद्या३१२२४यि । त्वायश्रसम् । वसूवा१यिदा२रम् । अनूशू१रा२ । चरा३ । मा२३४५ । सा२३४५यि ॥(१) अनू३शू३रचराम सोवा । आनुशूर । चरामा१सा२यि । पौरोअश्वा३१२३४ । स्यपुरुकृत् । गवामा१सा२यि । उत्सोदा१यिवा२ । हिरा३ण्या२३४५ । या२३४५ः ॥(२) उत्सो३दे३

* ऊ० गा० ११प्र० १ख० १८खा० ।

वहिरण्ययौवा । ऊत्सोदेव । ह्विराण्या१या२ः । ना
किर्हिदा३१२३४ । नमपरिम । धिषात्तू१वा२यि । यद्या
द्या१मा२यि । तदा३ । भा२३४५ । रा२३४५(३) ॥६*॥[२]

॥ मानवम् ॥ श्रग्ध्यूषू । शचीपा२३४तायि । श
चायिपा२३४तायि । श्रायिन्द्रविश्वा । भिरूता१यिभा२
यिः । भगम् । नहि । त्वायश्रशा३म् । वसू२वा२३४
यिदाम् । श्रनुशूरा२३ । चा२रा२३४औहोवा । मा२३
४सो ॥(१) श्रनुशूरा । चरामा२३४सायि । चरामा२ ३ ४
सायि । श्रानुशूर । चरामा१सा२यि । पौ । रः । श्रश्व ।
स्यापुरूकृ४त् । गवा२मा२३४सायि । उत्सोदेवा २ ३ ।
हा२यिरा२३४औहोवा । ण्या२३४याः ॥(२) उत्सोदेवा ।
ह्विरण्या२३४याः । ह्विराण्या२३४याः । उत्सोदेवह्विरा

* ऊ० गा० ११प्र० २श्च० ६सा० ।

२ १ २ र १ ० २ १
एया१या२ः। नाकिः। हिटा। नापरिमा३। धिषा

३ ५ १ २ र १ १ ३ ५ र र
२त्तू२३४वायि। यद्द्यामा२३यि। ता२दा२३४औहोवा।

३ ५
भा२३४रा(३) ॥ ११ * ॥ [३] ३

अथ त्वंह्येहिचेरवइति प्रगाथात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

२उ ३ १ २ ३ २उ ३ १ २
त्वꣳह्येहिचेरवे विदाभगंवसुत्तये।

१ २ ३ १ २ ३ २ ३ १ २
उद्वावृषस्वमघवन्गविष्टयउदिन्द्राश्वमिष्टये ॥ १ † ॥

हे "इन्द्र!" "त्वं हि" त्वं खलु सामर्थ्याद्दातेति गम्यते। अतः "एहि" आगच्छ। आगत्य च अस्मभ्यं "भगं" भजनीयं धनं "विदाः" लभस्व दत्स्व। किमर्थम्? "वसुत्तये" अस्माकं वसु-दानाय। हे "मघवन्" धनवन्! "गविष्टये" गा इच्छते मह्यं "उद्वावृषस्व" उत्सिञ्च गाइति शेषः। तथा हे इन्द्र! "अश्वमिष्टये" अश्वेषणवते मह्यम् अश्वान् उद्वावृषस्व उत्सिञ्चस्व देहि ॥ १ ॥

---

* ऊ० गा० १८प्र० २अ० ११गा०।

† छ० आ० ३, १, ५, ८ (१भा०४९०पृ०)= ऋ० वे० ६, ४, ३६, २।

अथ द्वितीया।

२ ३ २ ३१२ ३१२ ३२३१२
त्वम्पुरूसहस्राणिशतानिचयूथादानायमꣳहसे।
१ २ ३१२ ३१२ ३२३२३१२
आपुरन्दरञ्चकृमविप्रवचसइन्द्रङ्गायन्तोवसे॥ २ *॥ ४

हे इन्द्र! त्वं "पुरू" पुरूणि बहूनि "सहस्राणि शतानि च" "यूथा" गवादि-यूथानि "दानाय" यजमाना-विषयाय "मंहसे" अनुमन्यसे [यद्वा, दानाय दात्रे यजमानाय मंहसे प्रयच्छसि। मंहति दानकर्मा (निघ० ३, २०, १०)] अथ परोक्षेण ब्रवीति—"पुरन्दरं" शत्रु-पुराणां दारयितारम् "इन्द्रम्" "अवसे" रक्षणाय तर्पणाय वा "गायन्तः" स्तुवन्तः विप्रवचसः" विविध-प्रकृष्ट-वचना वयम् "आ" आगन्तारम् अभिमुखं वा "चकृम" कुर्मः॥ २॥ ४

५ ४ २ ४र ५र २
॥ कौल्मलबर्हिषम्॥ तुवा३ꣳहो३णहिचेरवायि। वि
१र १ २ र १ २ र
दाभगंवस्२त्तायार३४यि। उद्वावृषस्वमघावान्। ऐ
१ १ र २ १ ५
होयि। गा२विष्टयायि। उदिन्द्राश्वमोवा३ओ२३४वा।
५ ५ ४ २ ४ ५ १
ष्टा५योईहायि॥(१) उदा३यिन्द्रा३अश्वमिष्टयायि। उदि
र १ २ र १ २ र १
न्द्राश्वमा२यिष्टायार२३४यि। त्वम्पुरूसहस्राणी। ऐहो

* ऋ० वे० ६, ४, ३६, १।

१र    २ २ २ २    २ १    ५
यि । श्रा २तानिचा । यूथादानायमोवा३ओ२३४वा ।
४    ५    ५२ ४  २  ४२ ५    १२ २
हा५सो६हायि ॥(२) यूथा३दा३नायमᳶहसायि । यूथा
२ २    १    ३र    १ १    २
दानायमा २ᳶहासा२३४यि । आपुरन्दरञ्चकृमा । ऐ
१    १    २    २ १    ५
होयि । विप्रा २वचसाः । इन्द्रङ्गायन्तोवा३ओ२३४वा ।
४    ५
वा५सो६हायि(३) ॥ १८ * ॥ [१]

१२ २    २    १    २
॥ काण्वबृहत् ॥ औहोतुवᳶहिया ३ ए । हिचायिरा१
३र २    १    २ २    २    १
वा२३४यि । हाहोयि । वायिदाभगंवसुत्तये । उद्दा
२    ३र २    १    २    १    २
वा१र्षा२३४ । हाहो । खामघवन् । गवायिष्टा१या२
३र २    १    २    ३र २
३४यि । हाहोयि । उदायिन्द्रा१आ २ ३ ४ । हाहो ।
१    २    ३र २    ३ २    १
उदाआ१यिन्द्रा२३४ । हाहो । अमा३यि । ष्टा२३४
५    ५    २र २    २
यायि । उऊवा६हाउ । वा ॥(१) औहोउदिन्द्रआ३ए ।
१    २    ३र २    १    २    १
अमायिष्टा१या२३४यि । हाहोयि । तूवम्पुरू । सहा

* ऊ० गा० ११प्र० १ख० १८सा० ।

२ ३र २ १ २ ३र
खा१णा२३४यि। हाहोयि। शतानाश्यिचा२३४। हा
२ १र २ ३र २ ३ १ १
होयि। यूथादा१ना२३४। हाहो। यमा३। हा२३
५ ५ ३र र र र र
४सायि। उहुवाई्हाउ। वा॥(२) औहोयूथादाना
२ १ २ ३र २ १ २
३ए। यमा१हा१सा२३४यि। हाहोयि। आपुरन्दरम्।
१ २ ३र ३ १ १ २र
चक्रमा१वा२३४। हाहोयि। प्रवाचा१सा२३४:। हा
२ १ २ ३र २ ३र १ १
होयि। इन्द्रागा१या२३४। हाहो। तोआ३। वा२
५ ५
३४सायि। उहुवाई्हाउ। वा(३)॥ १८*॥ [२] ४

अथ योविश्वेति प्रगाथात्मकं पञ्चमं सूक्तम्,

तत्र प्रथमा।

२उ ३ १ २ ३ २ ३ १ २ ३ १र २र
योविश्वादयतेवसुहोतामन्द्रोजनानाम्।
२ ३ १र २र ३ १ २ ३ १र २र ३ १ २
मधोर्नपात्राप्रथमान्यस्मैप्रस्तोमायन्त्वग्नये॥ १ †॥

---

* ऊ० गा० २२प्र० १अ० १८सा०।

† छ० आ० १, १, ४, १० (२भा० १६५पृ०) = ऋ० वे० ६, ७, १४, १।

"होता" देवानामाह्वाता "मन्द्रः" मोदतः "यः" अग्निः "विश्वा" सर्वाणि "वसु" वसूनि धनानि "जनानां" जनेभ्यः "दयते" प्रयच्छति ; तस्मात् "अग्नये" "मधोः" मदकरस्य सोमस्येव "प्रथमानि" मुख्यानि "पात्रा" पात्राणि "स्तोमाः" "प्र यन्तु" प्रगच्छन्तु ॥ १ ॥

अथ द्वितीया ।

२ ३ १ ३ १ ३क २र ३ १ २ ३ १ २ ३ १ २
अश्वन्नगीर्भीरथ्यꣳसुदानवोमर्मृज्यन्तेदेवयवः ।
३ १ ३ १र २र ३ २ ३ १ २ ३ १ २
उभेतोकेतनयेदस्मविश्पतेपर्षिराधोमघोनाम् ॥ २*॥५

हे "दस्म" दर्शनीय ! "विश्पते" विशां पते अग्ने ! यं त्वां "सुदानवः" शोभन-दानाः "देवयवः" देवानात्मन इच्छन्तो यजमानाः "रथ्य" रथस्य वोढारम् "अश्वं न" अश्वमिव "गीर्भिः" स्तुतिभिः "मर्मृज्यन्ते" परिचरन्ति त्वमस्माकं यजमानानां "तोके" पुत्रे "तनये" पौत्रे "उभे" उभयस्मिन् "मघोनां" धनवतां "राधः" धनं "पर्षि" प्रयच्छ ॥ २ ॥ ५

२र र र र र र २
॥ दर्शश्रवसम् ॥ योविश्वादयतेवसोहाओहा ३ ए ।
१ १र र ऽ २ ऽ २ २
होता २मन्द्रोजना २नाम् । ओ३हा । ओ३हा३ए३४ ।
१ २ ३ २ १ २ र १ २ ऽ २
मधो३४र्नपा । त्राप्रथ । मानायस्माथि । ओ ३ हा ।

* ऋ० वे० ६, ७, १४, १ ।

ओ३हा३ए३४। प्रस्तो३४माया३। तुवो२३४वा। ग्ना

५योऽ६हायि ॥(१) प्रस्तोमायत्वग्नयओहाओहा३ए। प्रस्तो

मा२यत्वग्नये। ओ३हा। ओ३हा३ए३४। अश्वा३४न

गायि। भायिरथि। यः शुद्दानवाः। ओ३हा। ओ३

हा३ए३४। मन्द्र३४ज्यन्ता३यि। देवो२३४वा। या५

वोऽ६हायि ॥(२) मन्द्रंज्यन्तदेवयवओहाओहा३ए। मन्द्र

ज्यन्ता२यिदेवयवः। ओ३हा। ओ३हा३ए३४। उभा

३४यितोकायि। तानये। दस्माविश्पतायि। ओ३हा।

ओ३हा३ए३४। पर्षा३४यिराधा३ः। मो२३४ना। धो

५नोऽ६हायि(३) ॥ ५ * ॥ [१] ५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षोड़शस्याध्यायस्य

प्रथमः खण्डः ॥ १ ॥

---

* ऊ० गा० ११प्र० २ख० ५सा०।

अथ द्वितीय-खण्डे—

इमम्मेवरुणेत्येकर्च्चं प्रथमं सूक्तम्,

सा ऋग्वेषा।

३ १ २ ३ १२ ३१ २
इमम्मेवरुणश्रुधीहवमद्याचमृडय।
१ २ ३१र २र
त्वामवस्युराचके ॥ १ * ॥ ६

हे "वरुण !" "मे" मदीयम् "इमं" "हवम्" आह्वानं "श्रुधि" शृणु [ श्रु श्रवणे ( स्वा० प० ), लोटो हिः, "श्रु-शृ-णु-पृ-कृ-वृभ्यश्छन्दसि ( ६, ४, १०२ )"—इति हेर्द्धिरादेशः, "बहुलं छन्दसि ( २, ४, ७३ )"—इति विकरणस्य लुक् "अन्येषामपि दृश्यते ( ६,३,१३६ वा० )"—इति संहितायां दीर्घः]। किञ्च "अद्य"† अस्मिन् दिने "मृडय" अस्मान् सुखय "अवस्युः" रक्षणेच्छुः [ अवस्-शब्दात् "सुपआत्मनः क्यच् ( ३, १, ८ ), "क्याच्छन्दसि ( ३, २, १७० )"—इति उ-प्रत्ययः ] एवं विधोऽहं त्वां वरुणम् "आ" आभिमुख्येन "चके" शब्दयामि [ कै, गै शब्दे ( स्वा० प० ), अस्माल्लिटि "आदेच ( ६, १, ४५ )"—इत्यात्वं, द्विर्भाव-चत्वें, "आतोलोप इटि च (६,४,६४ )"—इत्याकार-लोपः, "तिङतिङः ( ८, १, २८ )"—इति निघातः; स्तौमीत्यर्थः ॥ १ ॥ ६

---

* ऋ० वे० १, २, १९, ४।

† संहितायान्तु दीर्घश्रुतिः "निपातस्य च (६, ३, १३६)"—इति तत्र दीर्घः।

कयात्वन्नइत्येकर्च्चं द्वितीयं सूक्तम्,

सा ऋगेषा।

१ २ १ २ ३ १२ ३१२
कयात्वन्नऊत्याभिप्रमन्दसेवृषन्।

१ २ ३ २ ३ १ २
कयास्तोतृभ्यआभर॥ १ *॥ ७

हे "वृषन्" कामानां वर्षित इन्द्र! "कया" केन "ऊत्या" [अव रक्षणादिषु (भ्वा० प०), गत्यर्थः "ऊति-यूति (३,३,९७)"—इत्यादिना निपातितः]। केनाभिगमनेन "नः" अस्मान् "अभि" अभितः "प्र मन्दसे" प्रकर्षेण मादयसि अस्मदीयं यज्ञं प्रति सोमपानार्थमागमनेन वा त्वदीयस्तुति-श्रवणार्थमागमनेन वा कदा अस्मान् प्रमादयसीति। किञ्च "कया" केन "अभि" गमनेन "स्तोतृभ्यः" अस्मभ्यं धनम् "आ भर" बिभर्षि?—इतीन्द्रं स्तोता पृच्छति॥ १॥ ७

अथेन्द्रमिद्देवतातयइति प्रगाथरूपं तृतीयं सूक्तम्,

तत्र प्रथमा।

२ ३ २३ १ २ ३१ २ ३क १२३ १
इन्द्रमिद्देवतातयइन्द्रम्प्रयत्यध्वरे।

१ २ ३ २ ३ १२ ३२ ३१२ ३ १२
इन्द्रꣳसमीकेवनिनोहवामहइन्द्रन्धनस्यसातये॥ १ †॥

* ऋ० वे० ६, ६, २४, ४।

† छ० आ० ३, २, १, ७ (१भा० ४१५ पृ०) = ऋ० वे० ६, ७, २४, ५।

"देवतातये" [देवैः स्तोतृभिस्तायते विस्तार्य्यत इति] देवतातिर्यज्ञस्तदर्थम् "इन्द्रम् इत्" देवेषु मध्ये इन्द्रमेव "हवामहे" आह्वयामहे। "अध्वरे" यज्ञे "प्रयति" प्रगच्छति उपक्रान्ते सति "इन्द्रं" हवामहे। तथा "समीके" सम्यगुजाते सम्पूर्णे च यागे "वनिनः" सम्भजमानाः वयम् "इन्द्रम्" इन्द्रमेवाह्वयामहे [यद्वा, समीकमिति सङ्ग्राम-नाम (निघ० २, १७, ११), समीके सङ्ग्रामे इन्द्रमाह्वयामहे] "धनस्य" "सातये" लाभाय "इन्द्रम्" इन्द्रमेव आह्वयामहे। अतः शीघ्रमिन्द्र आगच्छत्वित्यर्थः॥ १॥

अथ द्वितीया।

१ २ ३ १र २र ३ २ ३ १ १ १ २
इन्द्रोमह्नारोदसीपप्रथच्छवइन्द्रःसूर्य्यमरोचयत्।

१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
इन्द्रेहविश्वाभुवनानियेमिरइन्द्रेस्वानासइन्दवः॥ २ *॥ ८

अयम् "इन्द्रः" "शवः" शवसः आत्मीयस्य बलस्य "मह्ना" महिम्ना महत्त्वेन "रोदसी" द्यावापृथिव्यौ "पप्रथत्" अप्रथयत् विस्तारितवान्। तथा स्वर्भानुहतं "सूर्य्यम्" "इन्द्रः" "अरोचयत्" अदीपयत् तस्यासुरेण बधेन प्रकाशितवान्। अपिच "इन्द्रे ह" अस्मिन्नेवेन्द्रे "विश्वा" विश्वानि व्याप्तानि "भुव-

* ऋ० वे० ६, ७, १९, १।

नानि” भूतजातानि “येमिरे” उपरमन्ते इन्द्रेण नियम्यन्त इत्यर्थः । तथा “स्वानासः” स्वानाः अभिषूयमाणाः “इन्दवः” सोमाश्च अस्मिन्नेवेन्द्रे नियम्यन्ते परमात्मन्यन्तर्भवन्तीत्यर्थः ॥२॥८

१ २ १ २र १
॥ यौक्तस्रुचम् ॥ इन्द्रेमिद्देवता । तयायि । इन्द्र
२ १ २ १ १ २र
प्रयतियध्वा २ ३ रायि । आयिन्द्रा२म् । समीकेवनि
र १ १र २ १ १ २ १
नोहवामा२३हायि । आयिन्द्रा२म् । धानस्यसो२३४
५ ३ ५ १ २ १ २ १
वा । ता२३४ये ॥(१) इन्द्रधनस्यसा । तयायि । इन्द्र
२ १र २ १ १र र र २ १
धनस्यसाता२३यायि । आयिन्द्रो२ । मह्नारोदसीपप्रथ
२ १ १ २१ ५ २
च्छा२३वाः । आयिन्द्रा२ः । सूर्य्यमरो२३४वा । चा२३
५ १ २ १र २ १ र २ १र
४यात् ॥(२) इन्द्रःसूर्य्यमरोचयात् । इन्द्रःसूर्य्यमरोचा२३
२ १ १ र र २ १र २
यात् । आयिन्द्रे२ । हविश्वाभुवनानियेमा२३यिरायि ।
१ १ र २ १ ५ ३ ५
आयिन्द्रे२ । स्वानासआँ२३४वा । दा२३४वा(३) ॥१२*॥[१]
२ र र २ १ २
॥ नैपातिथम् ॥ इन्द्रमिद्देवतातया३ए । आयिन्द्रम्प्रय ।

* ऊ० गा० ११प्र० २अ० १२सा० ।

१ २ २ ३र ५ १ २ र १र
तियाध्वरा३यि। हा। औहो२३४हा। इन्द्र ऌसमीके
२ १ २ १ ७ २ ३र ५
वनिनः। हवामहा२३यि। हा। औहो २ ३ ४ हा।
२ १ २ २ ५र ५ १ २
इन्द्रा ऌधाना३। हा। औहो२३४हा। स्वा२सा२३४
५र र ३ ५ २ र २ १
औहोवा। ता२३४ये॥(१) इन्द्रन्धनस्यसातया३ए। आ
२ १ २ २ ३र ५
यिन्द्रन्धन। स्यसातया३यि। हा। औहो २ ३ ४ हा।
१ र २ १र र २र १ २ १ ७ २ ३र
इन्द्रोमह्नारोदसीप। प्रथाच्छवा२३ः। हा। औहो२३
५ १ र १ २ ३र ५ १
४हा। इन्द्राःसूर्य्या३म्। हा। औहो२३४हा। आ
३ ५र र ३ ५ २ र र
२रो२३४औहोवा। चा२३४यात्॥(२) इन्द्रःसूर्य्यमरोच
२ १ २र १ १ २ ३र
या३दे। आयिन्द्रःसूर्य्यम्। अरोचया३त्। हा। औ
५ १ र २ १ १र १ २र १ ७
हो२३४हा। इन्द्रेहविश्वाभुवना। नियायिमिरा२३यि।
२ ३र ५ १ २ ३र
हा। औहो२३४हा। इन्द्रेस्वाना३। हा। औहो२३
५ १ ३ ५र र ३ ५
४हा। सा२आ२३४औहोवा। टा२३४वाः(३)॥५*॥[२]८

---

* ज० गा० १३प्र० ३ख० ५सा०।

अथ विश्वकर्मन्नित्येकर्च्चं चतुर्थं सूक्तम्,

सा ऋगेषा।

१ २ २ १ २ २ २
विश्वकर्म्मन्हविषावावृधानः
२ १ २ २ २ १२ १२
स्वयंयजस्वतन्वा२३४स्वाहिते।
१ २ ३ २ ३ १ २ ३ १ २
मुह्यन्त्वन्येअभितोजनास
३ १२ १२ ३ १ २ ३ १ २
इहास्माकम्मघवासूरिरस्तु॥ १ *॥ ९

हे "विश्वकर्मन्" विश्व-विषय-कर्मवन्! † एतन्नामक-परमेश्वर! "हविषा" हविर्भूतेन विश्वकर्मणा मया दत्तेन वा हविषा "वावृधानः" वर्द्धमानः ["विश्वकर्म्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवाञ्चकार स आत्मानमप्यन्ततो जुहवाञ्चकार"—इत्यादि निरुक्तम् (दै० ४, २६) पूर्वमुदाहृतं "स्वयं" स्वयमेव "तन्वा" शरीरेण "स्वाहिते" अग्नौ दत्तौ हविः "यजस्व" पूजय।] "अन्ये" मर्त्त्याः "जनासः" जनाः अयष्टारोऽस्मद्याग-विरोधिनो वा "मुह्यन्तु" मुग्धा भवन्तु, "अभितः" सर्वतः। अथ परोक्षकृतः—"इह" अस्मिन् यागे "अस्माकं" "मघवा" अस्मद्दत्तेन हविर्लक्षणेन धनेन धनवान्

---

* ऋ० वे० ८, ३, १६, ६ = य० वे० १७, २२।

† 'विश्वकर्मा सर्वस्य कर्त्ता'—इत्यादि निरु० दै० ४, २५।

सः "सूरिः" स्वर्गादि-फलस्य प्रेरकः "अस्तु" भवतु [ अत्र "विश्व-कर्मन् हविषा वर्द्धयमानः (दै०४, २७)"—इत्यादि निरुक्तं द्रष्टव्यम्* ॥

तन्वांस्वाहिते"-"पृथिवीमुतद्याम्"—इति पाठौ ॥ १ ॥ ९

अयारुचेति तृचात्मकं पञ्चमं सूक्तम्,

तत्र प्रथमा।

२ २ ३१र २र ३ २उ ३ १ १
अयारुचाहरिण्यापुनानोविश्वाद्वेषाꣳसि

३ १ १ ३ २ ३ २ ३ १ १
तरतिसयुग्वभिःसूरोनसयुग्वभिः।

१ २ ३ १ २ ३ १ २ ३ १र १
धारापृष्ठस्यरोचतेपुनानोअरुषोहरिः

२ ३ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २
विश्वायद्रूपापरियास्यृक्वभिःसप्तास्येभिर्ऋक्वभिः ॥१†॥

"पुनानः" पूयमानः सोमः "हरिण्या" हरित-वर्णया "अया" अनया "रुचा" रोचमानया धारया "विश्वा" सर्वाणि "द्वेषांसि" द्वेष्टॄणि रक्षांसि "तरति" विनाशयति। तत्र दृष्टान्तः—

* अत्रेयं महीधर-व्याख्या—"हे विश्वकर्मन् ! 'हविषा' मद्दत्तेन 'वावृधानः' वर्धमानो जातहर्षः सन् मम यज्ञे 'पृथिवीं' पृथिव्याश्रितानि भूतानि 'उत' अपिच 'द्यां' द्युलोकाश्रितानि भूतानि 'स्वयं यजस्व' मदनुग्रहाय। किञ्च त्वत्प्रसादात् 'अन्ये अभितः' स्थिताः 'सपत्नाः' जनाः 'मुह्यन्तु' मोहं प्राप्नुवन्तु किञ्च 'इह' यज्ञे 'मघवा' इन्द्र 'अस्माकं' 'सूरिः' पण्डितः आत्मज्ञानोपदेशकः 'अस्तु'।"—इति २७, २२ ।

† छ० आ० ५, २, ३, ७ (१भा० ९२३ पृ०) = ऋ० वे० ७, ५, २४, १।

"सूरो न" यथा सूर्यः "सयुग्वभिः" सह युक्तैः रश्मिभिः तमांसि हिनस्ति तद्वत् [सयुग्वभिरिति द्विरुक्तिरादरार्था । यद्वा, धारया युक्तः सोमः युक्तैस्तेजोभिः सह रक्षां तरति]। तस्य "पृष्ठस्य" दशापवित्रस्योपरिसिक्तस्य "धारा" "रोचते" दीप्यते "पुनानः" पूयमानः "हरिः" हरितवर्णः सोमः "अरुषः" आरोचमानो भवति "यद्" यः सोमः "सप्तास्येभिः" रस-हरण-शीलैः आस्यैः "ऋक्वभिः" स्तुतिमद्भिः "ऋक्वभिः" तेजोभिः "विश्वा" विश्वानि व्याप्तानि "रूपा" रूपाणि नक्षत्राणि "परि याति" गच्छति व्याप्नोति ॥

"पृष्ठस्य"-"सुतस्य"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

२ ३ १ १ ३ १ २ ३ १ २ ३२ ३ १ २
प्राचीमनुप्रदिशंयातिचेकितत्सꣳरश्मिभि

३ २उ ३ १ २ ३ १र २र
र्यततेदर्शतोरथोदैव्योदर्शतोरथः ।

१ २ ३ २ ३ १उ ३ १ २
अग्मन्नुक्थानिपौꣳस्येन्द्रञ्जैत्रायहर्षयन्

१ २ ३ १र २र ३ १ २ ३ १र १र
वज्रश्चयद्भवथोअनपच्युतासमत्स्वनपच्युता ॥ २ * ॥

"चेकितत्" जानानः सोमः "प्राचीं" पूर्वां "प्रदिशं" प्रकृष्टां दिशम् "अनु याति" अनुगच्छति । किञ्च "दर्शतः"

* ऋ० वे० ७, ५, २४, ३ ।

सर्वैर्दर्शनीयः "दैव्यः" देवेषु भवः तव "रथः" सूर्य्यस्य "रश्मिभिः" "सं यतते" सङ्गच्छते । पुनः "दर्शतः रथः"—इत्यादरार्थो। ततः "पौंस्या" पुंस्त्वावगमानि "उक्थानि" स्तोत्राणि "अग्मन्" इन्द्रं गच्छति "यद्" यदा "समत्सु" सङ्ग्रामेषु "अनपच्युता अनपच्युतौ शत्रुभिरपराजितौ, सोमस्त्वञ्च इन्द्रश्च युवां "समत्सु" सङ्ग्रामेषु सह भवथः, तदा स्तोत्रागमनादीनि भवन्ति । पुनः "अनपच्युता"—इत्यादरार्थो ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
त्वꣳ ह त्यत्पणीनां विदो वसु सम्मातृभि

३ १र २र३ १ २ ३ २ ३ १ २
र्मर्ज्जयसि स्व आ दम ऋतस्य धीतिभिर्द्दमे ।

३ २ ३ २उ ३ २उ ३ १ २ ३ १ २
परावतो न साम तद्यत्रा रणन्ति धीतयः

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
त्रिधातुभिररुषीभिर्वयो दधे रोचमानो वयो दधे ॥३*॥ १०·

हे सोम ! त्वं "त्यत्"† त्यानि "वसु" गवादीनि धनानि "पणीनां" पणिभिः अपहृतं तत् गवात्मकं धनं "विदः" अविदः अलभथाः । "आ" अपिच "ऋतस्य" यज्ञस्य "धीतिभिः" धात्रीभिः "मातृभिः" वसतीवरीभिः "स्वे" आत्मीये "दमे" यज्ञे "सम्मर्जयसि" सम्यक् शुद्धो भवसि । "परावतो न" दूर-

---

* ऋ० वे० ७. ५, २४, २ ।

† 'त्यच्छब्दस्तच्छब्द-पर्य्यायः'—इति वि० ।

स्वाद्दिशात् यथा "साम"* साम-ध्वनिः श्रूयते तथा तव "तत्" साम-ध्वनिः सर्वैः श्रूयते असौ सोमाभिषवाभिप्रायेणोक्तः। "यत्र" यस्मिन् शब्दे "धीतयः" कर्मणो धर्त्तारो यजमानाः "रणन्ति" रमन्ते, "रोचमानः" सोऽयं सोमः "त्रिधातुभिः" त्रयाणां लोकानां धारयित्रीभिः†, "अरुषीभिः" आरोचमानाभिः दीप्तिभिः "वयः" अन्नं‡ "दधे" स्तोतृभ्यः प्रयच्छति। पुनः "वयो दधे" —इत्यादरार्था॥ ३॥ १०

१ २ १ र २
॥ गायत्रपार्श्वम्॥ आया। हुवाहुरा३१उवा२३यि।

५ २ र १र २र१र र २ १ २ १र २र
णो२३४या। पुनानोविश्वाद्देषाऽसितरतिसयुग्वभिःहुरो

१ २ १ २१र र २ १ २र र र १र २ १र २र १ २र१र
नसयुग्वभिःशूरोपृष्ठस्यरोचतेपुनानोअरुषो हरिर्विश्वायद्रूपा

२ १र २ १ ३ १ १ १ १ २ १ २ ३ २ १
परियास्यृक्वभी२३४५ः। सप्तासो१येर। भिरा३। ऋं२

४ २ १ १ १ १
३वा३। क्वाभा२३४५यिः(१) ॥ ३ ¶ ॥ [१] १०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षोड़शस्याध्यायस्य द्वितीयः खण्डः॥ २॥

---

* 'साम-शब्दः साधु-वचनः'—इति वि०।

† 'त्रिधातुभिः—सुवर्ण-रजत-ताम्रैः'—इति वि०।

‡ 'वयः—स्वादम्'—इति वि०।

¶ ऊ० गा० १०प्र० २ख० ३गा०।

अथ तृतीय-खण्डे —

उतनोगोषणिमित्येकर्च्चं प्रथमं सूक्तम्,

सा ऋगेषा।

२ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २
उतनोगोषणिन्धियमश्वसांवाजसामुत।

३ १ २ ३ १ २
नृवत्कृणुह्यूतये॥ १ *॥ ११

"उत" अपिच हे "पूषन्!" "गोषणिं" गवां सनित्रीं दात्रीं "अश्वसां" अश्वानां सनित्रीं "वाजसां" वाजानामन्नानां सनित्रीम् "उत" अपिच "नृवत्" नृवतीं नृणां वनित्रीं दात्रीम् एवम्भूतां "धियं" बुद्धिं कर्म च "नः" अस्माकम् "ऊतये" तृप्त्यै उपभोगार्थं "कृणुहि" कुरु।

"ऊतये"-"वीतये"—इति पाठौ॥ १॥११

अथ शशमानस्येत्येकर्च्चं द्वितीयं सूक्तम्,

सैषा ऋक्।

२ १२ ३ १ २
शशमानस्यवानरःस्वेदस्यसत्यशवसः।

३१२ २र३ १ २
विदाकामस्यवेनतः॥ १ †॥ १२

हे "सत्यशवसः" अविनश्वर-बलाः "नरः" नेतारः मरुतः! "शशमानस्य" युष्मान् स्तुतिभिः सम्भजमानस्येत्यर्थः, "स्वेदस्य"

* ऋ० वे० ४, ८, १८, ५।  † ऋ० वे० १, ६, १२, ३।

स्नावक-मन्त्रोच्चारण-जनितेन श्रमेण क्लिद्यमान-गात्रस्य "वेनतः" [विनतिः कान्ति-कर्मा (निघ०२,६,४)] कामयमानस्य* "वा"-शब्दः समुच्चये, एवम्भूतस्य स्तोतुश्च "कामस्य" काममभिलाषं "विद" लम्भयत प्रयच्छतेत्यर्थः ॥ १ ॥ १२

उपनस्सूनवइत्येकर्चं तृतीयं सूक्तम्,

सैषा ऋक् ।

१ २ ३ १ ३ १ २ ३ २ ३ १ २ ३ २
उपनःसूनवोगिरःशृण्वन्त्वमृतस्यये ।

३ १ २
सुमृडीकाभवन्तुनः ॥ १ † ॥ १३

"अमृतस्य" मरण-रहितस्य प्रजापतेः "ये" "तनवः" पुत्राः ते देवाः "नः" अस्माकं "गिरः" स्तुतीः "उप शृण्वन्तु" "नः" अस्माकं "सुमृडीकाः" सुष्ठु मृडयितारः सुखयितारश्च "भवन्तु" सन्तु ॥ १ ॥ १३

प्रवाम्महीति तृचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा ।

२ ३ २ ३ १ २ ३ १ २
प्रवाम्महिद्यवीअभ्युपस्तुतिम्भरामहे ।

२ ३ २ ३ १ २
शुचीउपप्रशस्तये ॥ १ ‡ ॥

---

* 'सत्यश्रवसः—सम्यग्बलस्य 'विदाः' विद्वांसो वयं 'कामस्य' कमनीयस्य स्वादुनः 'वेनतः' स्तूयमानस्य'—इति वि० ।

† ऋ० वे० ४, ८, १५, ३ । ‡ ऋ० वे० ३, ८, ८, ५ ।

हे द्यावापृथिव्यौ! "द्यवौ" द्योतमाने "वां" युवाभ्याम् "उपस्तुतिं" स्तोत्रं "महि" महत् प्रभूतम् "अभि प्र भरामहे" प्रकर्षेण सम्पादयामः ॥ १ ॥

अथ द्वितीया।

पुनानेतन्वामिथःस्वेनदक्षेणराजथः।
उह्याथेसनादृतम् ॥ २ * ॥

हे देव्यौ! "तन्वा" स्वीयया मूर्त्या "दक्षेण" बलेन च "मिथः" प्रत्येकं "पुनाने" शोधयन्त्यौ यज्ञं यजमानं वा युवां "राजथः" ईश्वरे भवथः [यद्वा, 'तन्वा' स्व-शरीरैकदेशेन 'मिथः' प्रत्येकं पुनाने शोधयन्त्यौ द्यौः स्वीयेनोषरेण भुवं सा च स्वकीयेन कार्ष्णेन चन्द्रमस-स्थिते दिवमिति विवेकः] "सनात्" सदाकालम् "ऋतं" यज्ञम् "उह्याथे" वहथः ॥ २ ॥

अथ तृतीया।

महीमित्रस्यसाधथस्तरन्तीपिप्रतीऋतम्।
परियज्ञन्निषेदथुः ॥ ३ † ॥ १४

"मही" महत्यौ द्यावापृथिव्यौ "मित्रस्य" मित्रभूतस्य स्तोतुरभिमतं "साधथः" साधयथः। "ऋतम्" अन्नं "तरन्ती"

---

* ऋ० वे० ३, ८, ८, ६।

† ऋ० वे० ३, ८, ८, ७।

तारयन्त्यौ "पिप्रती" पूरयन्त्यौ "यज्ञं" "परि" परितः "निषेदथुः" आश्रयतः ॥ ३ ॥ १४

अयमुतेसमतसीति त्र्यचात्मकं पञ्चमं सूक्तम्,

तत्र प्रथमा ।

३ १ २ ३ १ २ ३ १ २ ३ २
अयमुतेसमतसिकपोतइवगर्भधिम् ।
२ ३ १ २
वचस्तच्चिन्नओहसे ॥ १ * ॥

हे इन्द्र ! "अयमु" अयमपि दृश्यमानः सोमः "ते" तदर्थं सम्पादितः यं सोमं "समतसि" सम्यक् सातत्येन प्राप्नोषि। तत्र दृष्टान्तः—"कपोत इव" यथा कपोताख्यः पक्षी गर्भधारिणीं कपोतीं प्राप्नोति तद्वत् । "तच्चित्" तस्मादेव कारणात् "नः" मदीयं "वचः" "ओहसे" प्राप्नोषि । [गर्भधिं—गर्भोऽस्यां धीतय इति गर्भधिः "कर्मण्यधिकरणे च ( ३, ३, ९३ )'—इति किप्रत्यय, कृदुत्तरपदप्रकृतिस्वरत्वम् ( ६, २, १३९), "ओहसे"—उहिर् दुहिर् अर्दने (भ्वा० प०), व्यत्ययेनात्मनेपदम् ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ १ २ ३ १ २
स्तोत्रꣳराधानाम्पतेगिर्वाहोवीरयस्यते ।
१ २ ३ १ २
विभूतिरस्तुसूनृता ॥ २ † ॥

---

* ऋ० आ० २, २, ४, ९ (१भा० ४०६पृ०) = ऋ० वे० १, २, २८, ४ ।

† ऋ० वे० १, २, २८, ५ ।

हे इन्द्र! राधानां* धनानां पते पालक! "गिर्वाहो" गीर्भि-रुह्यमान! "वीर" शौर्योपेत! "यस्य" "ते" तव "स्तोत्रम्" ईदृशं भवति तस्य तव "विभूतिः" लक्ष्मीः "सूनृता" प्रिय-सत्य-रूपा "अस्तु" ॥ २ ॥

अथ तृतीया।

३ १ २ ३ २ ३ १र २र
ऊर्द्ध्वस्तिष्ठानऊतयेऽस्मिन्वाजेशतक्रतो।
२ ३ १ २
समन्येषुब्रवावहै ॥ ३ † ॥ १५

हे "शतक्रतो" शत-सङ्ख्याक-कर्मोपेत! "अस्मिन्" प्रसक्ते "वाजे" सङ्ग्रामे "नः" अस्माकम् "ऊतये" रक्षणाय ["ऊति-यूति (३, ३, ९७)"—इत्यादिना क्तिन्नुदात्तत्वम्] "ऊर्द्ध्वः" उन्नतः उत्सुकः "तिष्ठ" भव। त्वञ्चाहञ्च मिलित्वा "अन्येषु" कार्येषु "सं ब्रवावहै" सम्यग्विचारयावः। [तिष्ठा—"द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति संहितायां दीर्घः ॥ ३ ॥ १५

गावउपवदावटइति त्र्यचात्मकं षष्ठं सूक्तम्,

तत्र प्रथमा।

२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
गावउपवदावटेमहीयज्ञस्यरप्सुदा।
३ १र २ ३ १ २
उभाकर्णाहिरण्यया ॥ १ ‡ ॥

---

* 'राधानां—अन्नानाम्—इति वि०। † ऋ० वे० १, ३, २९, १।

‡ छ० आ० २, १, ३, १ (१भा० २९२पृ०) = ऋ० वे० ५, ५, १६, २।

हे "गावः" घर्म्मदुघा यूयम् "अवटे" महावीरे महावीरम् "उप वद" उपावत [वर्ण-व्यत्ययः उपायच्छत] यस्मात् "यज्ञस्य" घर्मयागस्य साधनभूते "रप्सुदा" रप्सुदे [रिप्सोः फल-प्रद-लिप्सोरश्विनोर्दातव्ये। यद्वा, रपणं शब्दनं रप् मन्त्रः तेन सुष्ठु दातव्ये। अथवा, षूद क्षरणे (भ्वा० आ०) रपा मन्त्रेण क्षरणीये ईदृशे] गवाजयोः पयसी "मही" महती बहुले अपेक्षिते उपावत [गो-शब्दोऽजायाअप्युपलक्षकः अजापयसोऽपि महावीरे आसेचनीयत्वात्]। अपिचास्य महावीरस्य "उभा" उभौ "कर्णा" कर्ण-स्थानीयौ द्वौ रुक्मौ "हिरण्यया" हिरण्ययौ सुवर्ण-रजत-मयावित्यर्थः॥

"अवटे"-"अवतम्"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३१र २र३ १ २३ १ २ ३ १ २

**अभ्यारमिदद्रयोनिषिक्तम्पुष्करेमधु।**

३ १ २ ३ १ २

**अवटस्यविसर्ज्जने॥ २ *॥**

"अद्रयः" आद्रियमाणः अध्वर्य्वादयः "अभ्यारमित्" अभिगम्यैव "निषिक्तम्" अतिरिक्तम् "मधु" "पुष्करे" प्रवृद्धे उपयमनीय-पात्रे † सिञ्चति अग्निहोत्रार्थम् "अवटस्य" महावीरस्य "विसर्जने" विसर्जन-समये होमानन्तरं महावीरमासन्द्यामासाद्य॥

"अवटस्य"-"अवतस्य"—इति पाठौ॥ २॥

---

* ऋ० वे० ५, ५, १६, १। † 'पुष्करे—द्रोणकलशे'—इति वि०।

अथ तृतीया।

२ १ ३ १२ ३१२१ १२१२

सिञ्चन्तिनमसावटमुच्चाचक्रम्परिज्मानम्।

३ १ २ ३ १ २

नीचीनबारमक्षितम्॥ ३ *॥ १६

"अक्षितम्" अक्षीणम् ईदृशं क्षीराद्यवयवमुक्तम् आहवनीयस्योपरि "नमसा" नमनेन "सिञ्चन्ति" जुह्वन्ति महावीरेण हि आहवनीये हूयते॥

"अवटम्"-"अव्रतम्"—इति पाठौ॥ ३॥ १६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षोडशस्याध्यायस्य तृतीयः खण्डः॥ ३॥

---

अथ चतुर्थ-खण्डे—

माभेमेति प्रगाथात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१ २३१२ ३१२३१ १२

माभेममाश्रमिष्मोग्रस्यसख्येतव।

२२३१२ ३१२३१२ १२ ३२३१२

महत्तेवृष्णोअभिचक्ष्यङ्कृतम्पश्येमतुर्वशंयदुम्॥ १†॥

---

* ऋ० वे० ६, ५, १५, ५।

† ऋ० वे० ५, ७, ३१, १।

हे इन्द्र ! "उग्रस्य" उद्गूर्ण-बलस्य तव "सख्ये" सखित्वे सति वयं "मा भेम" मा भैष्म कुतश्चिदपि शत्रोर्भीता माभूम "मा श्रमिष्म" श्रान्ताः पीड़िताश्च मा भूम "वृष्णः" कामानां वर्षितुः "ते" तव सम्बन्धि "महत्" प्रभूतं वृत्र-बधादि-लक्षणं "कर्म" "अभि चक्ष्यम्" अभितः ख्यापनीयं स्तोतव्यम् अतः महानुभावस्य तव सख्य-प्राप्तानां भीति-श्रमौ न जायेते इत्यर्थः । तत् कथमवगम्यते ? इति चेत् उच्यते—"तुर्वशम्" ; "यदुम्" एतत्सञ्ज्ञकञ्च* त्वत्प्रसादात् सुखेन जीवन्तौ "पश्येम" दृष्टवन्तः खलु वयम् । अतः कारणात् त्वत्सख्यं प्राप्तस्य भयादिकं न जायत इत्येतदुपपन्नमित्यर्थः ॥ १ ॥

अथ द्वितीया ।

३ १र २र ३ २र ३ २ ३ २ ३ १ २
सव्यामनुस्फिग्यंवावसेवृषानदानोअस्यरोषति ।
२ ३ १ २ ३ ३ १ २ ३ २ ३ १ ३ २ ३ २ ३ १ २
मध्वासम्पृक्ताःसारघेणधेनवस्तूयमेहिद्रवापिब ॥२†॥१७

"वृषा" कामानां वर्षिता इन्द्रः "सव्या" दक्षिणेन "स्फिग्यं" कटि-प्रदेशम् "अनु" [तृतीयार्थे अनोः कर्मप्रवचनीयत्वम् ( १, ४,८५)]स्फिग्या शरीरैकदेशेनैव "वावसे" वस्ते सर्वं भूतमाच्छा-

* 'तुर्वशं यदुम्'—एतौ क्षत्रिय-कुमारौ—इति वि० ।

† ऋ० वे० ५, ७, ३१, ३ ।

दयति स्वयं कृत्स्नं जगद्दतीव वर्त्तत इत्यर्थः [ऋगन्तरञ्च दर्शयति—"यदन्यया स्फिग्या चामस्याः"—इति]। अपिच "दानः" अवखण्डयिता [दान अवखण्डने (भ्वा०प०), पचाद्यच्। (३,१, १३४) सच "अस्य" इममिन्द्रं "न रोषति" न हिनस्ति [रुष हिंसायाम् (भ्वा०प०) इन्द्रं हिंसितुं कश्चिदपि शक्तो नास्तीत्यर्थः। यद्वा, हे यजमान! 'दानः' हविषां दाता त्वम् 'अस्य' इन्द्रस्य 'न रोषति' रोषं न जनयतीत्यर्थः]। उत्तरोऽर्द्धर्चः प्रत्यचकृतः—"शारघेण" सरघा मधुमक्षिका, तत्सम्बन्धिना "मध्वा" मधुना लुप्तोपमानमेतत् मधुनेव रसवता चीरादिना अपण-द्रव्येण सम्पृक्ताः संसृष्टाः संस्कृताः "धेनवः" धेनुवत्-प्रीति-जनका: अस्मदीयाः सोमाः [यद्वा, धिविः प्रीणनार्थः (भ्वा०प०) 'धेनवः' प्रीणयितार इत्यर्थः। अथवा धेट् पाने (भ्वा० प०)—"धेट इच (उ० ३, ११)"—इत्यौणादिको न-प्रत्ययः सन्नियोग इकारान्तादेशश्च। पातव्याः सोमा इत्यर्थः]। यतएवमतः कारणात् हे इन्द्र! "तूयम्" क्षिप्रम् "एहि" अस्मत्समीपमागच्छ, आगत्य च सोमा यस्मिन्नुत्तरवेदिलक्षणे स्थाने ह्रयन्ते तं देशं "द्रव" शीघ्रं गच्छ [द्रु गतौ (भ्वा०प० )—इति धातुः "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति सांहितिको दीर्घः] तदनन्तरम् अध्वर्युणा दत्तं सोमं "पिब" तेन सोमेन सम्यक् स्वोदरं पूरयेत्यर्थः ॥ २ ॥ १७

इमाउत्वेति प्रगाथात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

२ ३ १ २ ३ १ २ ३ १२ ३१२

इमाउत्वापुरूवसोगिरोवर्द्धन्तुयाममा ।

२ ३ १२ ३ १ २ ३ १ २ ३ १२ ३१२

पावकवर्णाःशुचयोविपश्चितोभिस्तोमैरनूषत ॥ १* ॥

हे "पुरूवसो" बहुधनेन्द्र ! "मम" मदीयाः "इमाः" "गिरः" मन्त्ररूपा वाचः "त्वा" त्वां "वर्द्धन्तु" वर्द्धयन्तु । तथा "पावकवर्णाः" अग्नि-समान-तेजस्काः अतएव "शुचयः" शुद्धाः "विपश्चितः" विद्वांसः उद्गातारश्च "स्तोमैः" स्तोत्रैः बहिष्पवमानादिभिः "अभ्यनूषत" त्वामभिष्टुवन्ति [ नु स्तुतौ कुटादिः(प०)॥१॥

अथ द्वितीया ।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

अयꣳसहस्रमृषिभिःसहस्कृतःसमुद्रइवपप्रथे ।

२ ३ १२ ३१२ ३ १ २ ३ १ २ ३ १ २ ३ १ २

सत्यःसोअस्यमहिमागृणेशवोयज्ञेषुविप्रराज्ये ॥ २† ॥ १८

"अयम्" इन्द्रः "सहस्र" सहस्र-सङ्ख्याकैः ऋषिभिः अतीन्द्रियार्थ-दर्शिभिः स्तोतृभिः "सहस्कृतः" सहसा बलेन युक्तः कृतः [स्तुत्या हि देवताया बलं वर्द्धते; सच एवं स्तुतः सन्] "समुद्रइव", उदधिरिव "पप्रथे" प्रथितो विस्तीर्णो बभूव । "अस्य" चेन्द्रस्य

---

* ऋ० आ० ३, २, १, ८ (२भा० ५१७४०)=ऋ० वे० ५, ७, १५, ३।

† ऋ० वे० ५, ७, १५, ४।

"सत्यः" अवितथः "सः" प्रसिद्धः "महिमा" महत्त्वं "शवः" बलं "यज्ञेषु" यागेषु "विप्रराज्ये" [राज्ञः कर्म राज्यम्] विप्राणां स्तोतॄणां राज्ये स्तुत-शस्त्र-सङ्घे* "गृणे" स्तूयते ॥ २ ॥ १८

४ ३र ४ ५र र ३ १ ३र ४र ५
॥ श्यैतम् ॥ इमाउत्वापुरू । वसा ३ ४ औहोवा ।
१ र २ १ ० ५ ५ २र १ २र
गायिरोवर्द्धं । तुयाममा२३४ । श्रो६हा । पावकवर्णाः ।
१ २ १ २ ५ १ र
शूचार२३याः । विपा२ः । चा२३४यिताः । अभिस्तोमा
२ २ १ २ ५र र ४
यिरा३नू । ऊम्मायि । षा२ता२३४औहोवा ॥(१) अ
३ र ४र ५ र ३ २ ३र ४र ५ १ २र र १
भिस्तोमैरनू । षता३४औहोवा । आभिस्तोमैः । अनू
० ५ ५ १ १ २ १ २ १
षता२३४ । ओ६हा । अयᳪसहस्रम् । आर्षा२३यि
२ १ २ ५ १ र २ १
भायिः । सहा२ः । का२३४र्त्ताः । समुद्राइवा३पा ।
१ २ ५र ५ ४ ३ ४ ५ २
ऊम्मायि । प्रा२था२३४औहोवा ॥(२) समुद्रइवप । प्र
२ ३र ४र ५ १ २ १ ० ५
था३४औहोवा । सामुद्रइ । वपाप्रथा२३४यि । ओ६
५ २ १ र २ १ २ १ ३
हा । सत्यःसोअस्य । माहा२३यिमा । गृणा२यि । शा

* 'विप्रराज्ये—ब्राह्मणाध्यक्ष-भूमे राज्ये'—इति वि० ।

५ १र २ २ १ २
२३४वाः। यज्ञेषुवायिप्रा३रा। ऊम्मायि। जा२या२३
५र र ३ ५
४औहोवा। वा२३४द्ध(३)॥ १० *॥ [१]

१ र ५ ४र ५ र ४ ५
॥ नौधसम्॥ आ२३४यि। माउत्वापुरू। वासा
२ १र २ १ २ २ १ २ १
उ। गिरोवर्द्धा। तू३यामा३मा। पा२३वा। काव
२र १ २ १ २ ३ ५ १ २
र्णाः। शुच। यो। वायिपस्था२३४यिताः। आ२३भायि।
१ र २ १ ५ ३ ५ १ र
स्तोमैरनो२३४वा। षा२३४ता॥(१) आ२३४। भिस्तो
५र र ४ ५ २ १ र २ १ २ २
मैरनू। षाता। अभिस्तोमायिः। आ३नूषा ३ ता।
१ २ १ २ १ १ १ २ ३
आ२३याम्। साहस्रम्। ऋषि। भायिः। साहस्का
५ १ २ १ २ १ ५ ३ ५
२३४र्त्ताः। सा२३म्। द्राइवपो२३४वा। प्रा२३४थे॥(२)
१ ५ ४ ४ २ १ २
सा२३४म्। उद्रइवप। प्राथायि। समुद्रायि। वा
१ २ २ १ २ १ २ १ २ १
३पाप्रा३थायि। सा२३त्याः। सोअस्य। महि। मा

* ऊ॰ गा॰ १२प्र॰ १ख॰ १०सा॰।

गार्णायिम्रा२३४वाः। या२३ ञ्चायि। पूविप्ररो २३४ वा। औ२३४ये(३)॥ ५*॥ [२] १८

अथ यस्यायमिति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

यस्यायंविश्वआर्योदासःशेवधिपाअरिः।

तिरश्चिदर्येरुशमेपवीरवितुभ्येत्सोअज्यतेरयिः॥ १†॥

"यस्य" यज्ञस्य "अयं" "विश्वः" सर्वो लोकः "आर्यः" प्रभुरपि "शेवधिपाः" निधि-पालकः ["विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि"—इति (ऋ०वे०९,२,२२,४) मन्त्रान्तरे पठितत्वात्] "दासः" भृत्यइव "अरिः" भवति स यज्ञः "अर्ये" स्वामिनि "रुशमे" नियन्तरि "पवीरवि" सरस्वत्याः पितरि ["पावीरवी कन्या चित्रायुः सरस्वती"‡—इत्युक्तम्] "तिरश्चित्" तिरोभूतोऽपि "तुभ्येत्" हे इन्द्र! तुभ्यमेव "रयिः" हविर्लक्षणं धनमुद्दिश्य "अज्यते" प्राप्तो भवति [अयमभिप्रायः—विप्र-क्षत्रादिकः सर्वो लोकः बृहस्पतिः, स च राजसूयादि-रूपस्य यज्ञस्य भृत्या वर्त्तते, स तादृशो यज्ञो मन्त्र-रूपायाः सरस्वत्याः

* ऊ० गा० १८प्र० २ख० ५सा०।   † ऋ० वे० ६, ४, १९, ४।

‡ निरुक्त-दैवतकाण्डीय त्रिंशत्तमं खण्डं "पविः शल्योभवतीत्यादिकं द्रष्टव्यम्।

पित्र-स्थामीये परमेश्वर-स्वरूपे गूढोऽपि सन् हे इन्द्र! त्वदर्थमेवं हविर्दातु प्रकटीभवति तथाविधस्तव महिमेति] ॥ १ ॥

अथ द्वितीया ।

२ १ २ १ १ ३ १ ३ १ २ ३ १ २
तुरण्यवोमधुमन्तङ्घृतश्चुतंविप्रासोअर्कमानृचुः ।
३ १ ३ १ २ ३ १ २ १ ३ २ ३ २ ३ १ १
अस्मेरयिःपप्रथेवृष्ण्यंशवोस्मेस्वानासइन्दवः ॥ २* ॥ १९

"तुरण्यवः" यागादि-कर्मसु त्वरण-शीलाः† "विप्रासः" मेधाविन ऋत्विजः "मधुमन्तं" मधु-क्षीराद्याहुति-युक्तम्, [घृतमाज्यं श्चोतते क्षरति यस्मिन्नाहुति-द्वारेणेति] "घृतश्चुतम्‡", "अर्कम्" अर्चनीयमिन्द्रम् "आनृचुः" पूजयन्ति§ । किमर्थम्? इत्युच्यते—"अस्मे" अस्मभ्यं "रयिः" हविर्लक्षणं धनं "पप्रथे" प्रख्यातं भवतु । तथा "वृष्ण्यं" वर्षण-शीलं सोम-निबन्धनं "शवः" बलमपि प्रथताम् । तथा "अस्मे" अस्मासु "स्वानासः" सुवानाः अभिषुताः "इन्दवः" सोमाः प्रख्याता भवन्तु । एवं फलं कामयमानाः ऋत्विजः इन्द्रं पूजयन्तीत्यर्थः ॥ २ ॥ १९

---

* ऋ० वे० ६, ४, १९, ५ ।

† 'तुरण्यवः—वेगवन्तः'—इति वि० ।

‡ 'घृतश्चुतं—घृतमिश्रम्, उदकमिश्र-सोमम्'—इति वि० ।

¶ 'अर्कं'—द्रोणकलशम्'—इति वि० ।

§ 'आनृचुः—नीतवन्तः'—इति वि० ।

५ र १ ० ४ ५र ४ ५ २र १ २र १
॥ कालेयम् ॥ यस्यायाइविश्वाअर्य्याः । दासाःशेवा ।
२ ३र २ १ २ ३ २ १ ३ ४र ५र
धिपाअराररइयिः । तिरश्चिदा३ । यें२३४ । रुशमेपवी ।
२ २ १ ३ २ २ ५ ४
रा३वायि । तुभ्येत्सओ । वा३४३ओ३४वा । ज्यते५र
५ र २ ४ ५ ४र ५ २ १र २र १
यायिः ॥(१) तुभ्येत्सो३अज्यतेरयायिः । तुभ्येत्सोआ ।
२ ३र २ १ २ ३ २ १ ३ ४
ज्यतेरयार३यिः । तुरण्यवा३ । मा२३४ । धुमन्तङ्
५ २ २ १ ३ २ २ ५ ४
त । सू३ताम् । विप्रासओ । वा३४३ओ३४वा । क्रमा
५ र २ ४ ५ ४र ५ २ १र २र १
५नृचूः ॥(२) विप्रासो३अर्कमानृचूः । विप्रासोआ ।
२ ३र २ १ २ ३र २ १ ३ ४र
क्रमानृचूर३ः । अस्मेरया३यिः । पा२३४ । प्रथेन्त्रृष्णि
५ २ २ १ ३र २ २ ५
यम् । शा३वाः । अस्मेस्वानो । वा३ ४ ३ओ३ ४वा ।
४ ४
सआ५यिन्द्रवाः । चो५ई । डा(३) ॥ ११ * ॥ [१] १९

---

* ऊ० गा० १२प्र० १अ० ११सा० ।

अथ गोमन्नइन्दो इति त्वचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ १ २
गोमन्नइन्दोअश्ववत्सुतःसुदक्षधनिव।
१ २ ३ २ ३ २ ३ १ २
शुचिञ्चवर्णमधिगोषुधारय ॥ १ * ॥

हे "सुदक्ष" हे सुबल ! हे "इन्दो" सोम ! "सुतः" अभिषुतस्त्वं "नः" अस्माकं "गोमत्" यज्ञ-साधन-गो-युक्तम् "अश्ववत्" अश्वयुक्तं धनं "धनिव" धन्व [वर्ण-विकारोऽत्र] गमय [ धविर्गत्यर्थः (प०)भूवादिः] ततोऽहं "शुचिं" पूतं दीप्यमानं "वर्णं" रसं "च" "गोषु" गव्येषु क्षीरादिषु "अधि धारय" अधिमिश्रयामीत्यर्थः ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २
सनोहरीणाम्पतइन्दोदेवप्सरस्तमः।
१ २ ३ २ ३ १ २ ३ १ २
सखेवसख्येनर्योरुचेभव ॥ २ † ॥

हे "हरीणाम्पते" अस्मदीयानां हरित-वर्णानां पशूनां स्वामिन्! हे "इन्दो" सोम ! "देव !" "प्सरस्तमः" अतिशयेन दीप्त-रूपोपेतः "नर्य्यः" कर्म्म-नेतृभ्य ऋत्विग्भ्यः हितः "सः" त्वं

---

* ऋ० भा० ६,२,१,९ (२भा० २१८पृ०)=ऋ० वे० ७, ५, ८, ४।
† ऋ० वे० ७, ५, ८, ५।

"नः" अस्माकं "रुचे भव" दीप्तिकरो भव। कइव? "सखेव" यथा सखा "सख्ये" मित्राय दीप्तिं करोति, तद्वत् ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ १र २र ३ १ २ ३ १ २
सनेमित्वमस्मदा अदेवङ्कञ्चिदत्रिणम्।
३ १ २ ३ २ ३ २ ३ १ २ ३ २
साह्वाꣳइन्दोपरिबाधोअपद्वयुम् ॥ ३ * ॥ २०

हे सोम! "त्वं" "सनेमि" पुराणं सख्यम् "अस्मद्" अस्मासु "आ" कुरु। अपिच "अदेवम्" अदेवन-शीलं† "कञ्चिद्" अपि "अत्रिणम्" अदन-शीलं राक्षसम् अस्मत्तः "अप" गमय। किञ्च हे "इन्दो" सोम! साह्वान्" शत्रून् अभिभवन् "बाधः" बाधमानान् "परि" जहि। तथा "द्वयु" द्वयवन्तं सत्यानृत-युक्तं बाह्याभ्यन्तरमय-द्वयोपेतं वा राक्षसमस्मत्तोऽपगमय ॥३॥२१

१र २ १ २ १
॥ अध्यम् ॥ गोमन्ना२यिन्दो। अश्ववोवा। सुतः
२ १ २ ३ २ १ २ १ २ १ २ १र
सुदा। क्षधनिवा। शुचिञ्चवर्णमधिगोषु। धार३।
२ १र १ र र १
रयाउवा। शुधिया२ ॥(१) सनोहरा२यिणाम्। पतों
२ १र २र १ २ ३ २ १ र २ १ २र १ २ १र
वा। इन्दोदेवा। प्सरस्तमाः। सखेवसख्येनरियोरु।

* ऋ० वे० ७, ५, ८, ६।

† 'अदेवं—देवानां भक्तो न भवति असावदेवः तम् अदेवम्'—इति वि०।

२ १र १र
चा२३यि। भवाउवा। गूधिया२॥(२) सनेमिह्व२

१ २र१र२१ २३२१ २र
वम्। अस्मदोवा। आदेवङ्काम्। चिदत्त्रिणाम्। सा

१र २र१ २१र२र१ २ १र
ह्वाᳪइन्दोपरिबाधोअ। पा२३। दयाउवा। गूधिया

१ २ १
२। ए२३ह्यिया३४३। औ२३४५ई। डा(१)॥१४*॥[१]

२र र १ २ १
॥ त्रैतम्॥ गोमन्नइन्दोअश्वावात्। सुतःसुदक्षध

२ १ ५ १ ३
निवा। शुचिञ्चवर्णमा३धायिगो२३४हायि। षू२धा२३

५र र २ १११११ २र र र १
४औहोवा। ए३। रया२३४५॥(१) सनोहरीणाम्पा

२ १र र २र २ १
तायि। इन्दोदेवप्सरस्तमाः। सखेवसख्ये ना३रायियो

५ १ ३ ५र र २ १३ ११
२३४हायि। रू२चा२३४औहोवा। ए३। भवा२३

११ २र १२ १र र
४५॥(२) सनेमितुवमास्मात्। आदेवङ्कश्चिदत्त्रिणाम्।

२र र र १ ५ १ ३ ५र र
साह्वाᳪइन्दोपरी३बाधो२३४हायि। आ२या२३४औहो

२ १३११११
वा। ए३। दयू२३४५म(३)॥२†॥[२]

---

*ऊ० गा० १२प्र० १अ० ४सा०। † ऊ० गा० १२प्र० १अ० २सा०।

२र १ २  ४ ५र  २ ३  ५
॥ पौष्कलम् ॥ गोमन्ना३इन्दो । आश्वा२३४वात् ।
२१ २१  २ ३  ५  २१  २१  ७
सुतःसुदा । त्वाधाय्मा२३४यिवा । प्रुचायिस्त्वा । णमा
३  २र १ ३ १ १ १ १  २१र २ ५र
२धा२३४५यिगो६५६ । पुधारया२३४५ ॥(१) सनोह्वा३री ।
२ ३  ५  २ १र २र १  २ १  ५
णाम्या२३४तायि । इन्दोदेवा । प्सारस्ता २ ३ ४ माः ।
२१  ७  ३  २र १ ३
सखायिवसा । खियार२यिना२३४५र्यो६५६ः । रूचेभवा
१११ १  २१र २ ५  २ ३  ५  २र १र २
२३४५ ॥(२) सनेमी३तु । वामा२३४स्मात् । आदेव
१  १ ३  ५  २र १  ७
काम् । चायिद्त्वा२३४यिणाम् । साक्षा०इन्दो । परा
३  २ १ ३ १ १ १ १
२यिवा२३४५धा६५६ः । अपदय२३४५म्(३)॥६*॥[३]२०

अथाञ्जत इति पञ्चमं सूक्तम्,

तत्र प्रथमा ।

३ २ ३क २र  ३ १ २  ३ १ २  ३ २  ३क २र
अञ्जतेव्यञ्जतेसमञ्जतेक्रतुꣳरिहन्तिमध्वाभ्यञ्जते ।
१ २  ३ २ ३ १ २  ३ १ २
सिन्धोरुच्छ्वासेपतयन्तमुक्षणꣳ
३ २ ३ १ ३ १ १
हिरण्यपावाःपशुमप्सुगृभ्णते ॥ १ † ॥

* ऊ० गा० १८प्र० २ख० ६सा० ।

† छ० आ० ६, २, २, ११ (२भा० १९७पृ०) = ऋ० वे० ७, ३, २०, ३।

सोऽयमृत्विजः "अञ्जते" गोभिः, तथा "व्यञ्जते" विविधमञ्जन्ति, "समञ्जते" सम्यगञ्जन्ति [स्तुत्यर्थत्वादपुनरुक्तिः]। तथा "क्रतुं" बल-कर्त्तारं "रिहन्ति" लिहन्त्यास्वादयन्ति देवाः। तथा पुनः "मध्वा" मधुना गव्येन "अभ्यञ्जते" तमेव सोमं "सिन्धोः" उदकस्य रसस्याधारभूते "उच्छ्वासे" उच्छ्रिते देशे "पतयन्तं" गच्छन्तं [पत्लृगतौ (भ्वा० प०)—इत्यस्मात् स्वार्थिके णिचि हृस्वाभावश्छान्दसः] "उक्षणं" सेक्तारं "हिरण्यपावाः" हिरण्येन पुनन्तः "पशु" द्रष्टारं ["पशुः पश्यतेः"—इति (निरु० नै० ३, १६) यास्केनोक्तत्वात्] "अप्सु" वसतीवरीषु "गृभ्णते" गृह्णन्ति ॥ १ ॥

अथ द्वितीया।

३ २ ३१२ ३१र २र
विपश्चितेपवमानायगायतमहीनधारात्यन्धोअर्षति ।

२ ३२३ १ २र ३२३
अहिर्नजूर्णामतिसर्पतित्वच

२ ३ १र २र ३२ ३१२
मत्योनक्रीडन्नसरद्वृषाहरिः ॥ २ * ॥

"विपश्चिते"† मेधाविने "पवमानाय" पूयमानाय "गायत" स्तुतिं कुरुत। सच "विपश्चित्" सोमः "मही न धारा" महती वर्ष-धारेव "अन्धः" अन्नं रसात्मकम् "अभ्यर्षति" "अहिर्न"

---

* ऋ० वे० ७, ३, २०, ४।

† 'विपश्चिते—विश्वरात्रे'—इति वि०।

अहिरिव "जूर्णं" जीर्णां त्वचम् "अति सर्पति" अतिमुञ्चति धारा दशापवित्रात् अभिषवादि-कर्म्मणा त्वचं विमुञ्चतीत्यर्थः। "अत्यः न" अश्व इव "क्रीड़न्" क्रीड़मानः "असरत्" सरति द्रोण-कलशं गच्छति। "वृषा" वर्षकः कामानां "हरिः" हरित-वर्णो रसः ॥ २ ॥

अथ तृतीया।

३ १र १र ३ २ ३ १ ३ १ २ ३ १ २
अग्रेगोराजाप्यस्तविष्यतेविमानोअह्नाम्भुवनेष्वर्पितः।

१ २ ३ १ २ ३ १ २ ३ १
हरिर्घृतस्नुःसुदृशीकोअर्णवो

३ १ २ ३ २ ३क २र
ज्योतीरथःपवतेरायओक्यः ॥ ३ * ॥ २१

"अग्रेगः" अग्रे गन्ता† "राजा" राजमानः "आप्यः" सुसंस्कृतः सोमः "तविष्यते" स्तूयते यः "अह्ना" दिनानां "विमानः" निर्म्माता चन्द्रकला-ह्रास-वृद्ध्यधीनत्वादहर्व्यवहारस्य निर्म्माता "भुवनेषु" उदकेषु वसतीवरी-सम्बन्धिषु "अर्पितः" स्थापितः सः "राजा" "तविष्यते"। किञ्च "हरिः" हरित-वर्णः "घृतस्नुः" प्रस्नुतोदकः "सुदृशीकः" शोभन-दर्शनः "अर्णवः"

* ऋ० वे० ७, ३, २०, ५।

† 'अग्रेगः— अग्रे देवानां गच्छति'—इति वि०।

उदकवान् [अर्णइत्युदकं नाम (निघ० १,१२,१) ["ज्योतीरथः" ज्योतिर्म्मय-रथः "रायः" धनस्य प्रापयिता "ओक्यः"["ओकइति निवास-नाम" ( निरु० नै० ३, ३ ) तस्य हितः ॥ ३ ॥ २१

॥ कावम् ॥ अञ्जोवा । तायिवियञ्जतायि । समञ्जतायि । क्रतुꣳरिहन्तिमधुवा । भियञ्जातारयि । सिन्धोरुच्छासेपतया । तमुत्ताणार३म् । हायिरा३ण्यापा । वाःपश्रूसार३ । स्रगा३भर्णापूता६५६यि ॥(१) विपोवा । चितेपवमाना । यगायातार । मह्वोनधाराअतिया । धोअर्षातारयि । अहिर्न्नजूर्णामतिसा । पतित्वाचार३म् । आत्यो३नाक्री । डन्नसारार३त् । वार्षा३हा५रा६५६यिः ॥(२) अग्रोवा । गोराजाअपियाः । तविष्यातारयि । विमानोअर्क्कोभुवनायि । धुवर्य्यायिता२ः । हरिर्घृतःस्नुःसुदृशायि । कोअर्णावा२३ः । ज्यो

२      ४ ५                  २ १                           १ २        ४
तौ ३ राथाः।   पवतायिरा २ ३।   याश्रो ३ का ५ या

६५६:(३) ॥ १७ * ॥ [१] २१

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षोड़शस्याध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १६ ॥

॥ इति सप्तमः प्रपाठकः† ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्ग-प्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे
उत्तराग्रन्थे षोड़शोऽध्यायः ॥ १६ ॥

———000@000———

---

* ऊ० गा० १२प्र० १ख० १७भा०।

† 'इति सप्तमः प्रपाठकः'—इति वि० मूलादि-सर्व-सम्मतश्च ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १७ ॥

## ॥ अथ सप्तदशोऽध्याय आरभ्यते ॥

तत्र,

प्रथमे खण्डे—

विश्वेभिरग्न इत्येतत् तृचं प्रथमं सूक्तं,

तत्र प्रथमा ।

१ २ ३ १ २ ३ २ ३ २ ३ १र २र
विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः ।
१ २
चनो धाः सहसो यहो ॥ १ * ॥

हे "सहसो यहो" बलस्य पुत्र ! देवतारूप ! "अग्ने !" "विश्वेभिः" अग्निभिः सर्वैराहवनीयादिभिर्युक्तः त्वम् "इमम्" अस्मदीयं "यज्ञम्" "इदम्" अस्मदीयं "वचः" स्तोमञ्च सेवमानः "चनः" अन्नं "धाः" अस्मभ्यं धेहि ॥ १ ॥

अथ द्वितीया ।

२ ३ १र २र ३ १ २ ३ १ २ ३ १ २
यच्चिद्धि शश्वता तना देवं देवं यजामहे ।
१र २र ३ २
त्वे इद्धूयते हविः ॥ २ † ॥

---

* ऋ० वे० १, १, २१, ५ ।   † ऋ० वे० १, १, २१, १ ।

"देवं देवम्" अन्यमन्यं वरुणेन्द्रादिरूपं नानाविधं देवताविषयं "यजामहे" तत्रापि तत् "हविः" सर्वं "त्वे इत्" त्वय्येव* हूयते अन्य-देवतान्तर-वियोगोऽपि त्वदीयैव सेवेत्यर्थः । [तना— तनु विस्तारे ( तना० प० ), "क्विप् च ( ३, २, ७६ )"—इति क्विप्, यद्वा पचाद्यच्, "सुपां सुलुगिति ( ७, १, ३८ ) तृतीयाया आकारः । देवंदेवं—"नित्यवीप्सयोः ( ८, १, ४ )"—इति द्विर्भावः, "तस्य परमाम्रेडितम् ( ८, १, २ )"—इति उत्तरस्याम्रेडितसञ्ज्ञायाम् "अनुदात्तञ्च ( ८, १, ३ )"—इति सर्वानुदात्तत्वम् । यजामहे—"निपातैर्यद्-यदि-हन्त ( ८, १, ३० )"—इति निघात-प्रतिषेधः । त्वे—युष्मच्छब्दात्सप्तम्येकवचनस्य "सुपां सुलुगिति ( ७, १, ३८ ) शे-आदेशः, "त्वमावेकवचने ( ७, २, ९७ )"—इति मपर्य्यन्तस्य त्वादेशः, शेषलोपे "अतो गुणे ( ६, १, ९७ )"—इति पररूपत्वम्, "शे ( १, १, १३ )"—इति प्रगृह्य-सञ्ज्ञायां "प्लुत-प्रगृह्या अचि ( ६, १, १२५ )"—इति प्रकृतिभावः । हूयते—"अकृत्सार्वधातुकयोः ( ७, ४, २५ )"—इति दीर्घः ॥ २ ॥

अथ तृतीया ।

३ १ २   ३ २ ३१ २ ३१२ ३२
प्रियोनोअस्तुविश्पतिर्होतामन्द्रोवरेण्यः ।

३ २ ३ १२ ३ १
प्रियाःस्वग्नयोवयम् ॥ ३ † ॥ १

---

* 'त्वे इत्—त्वे त्वम् । इत् इति पदपूरणः'—इति वि० ।

† ऋ० वे० १, १, २६, १ ।

"विश्पतिः" विशां प्रजानां पालकः [''पत्यावैश्वर्य्ये (६, २, १८)''—इति पूर्वपद-प्रकृतिस्वरे प्राप्ते "परादिश्छन्दसि बहुलम् (६, २, १९९)''—इत्युत्तरपदाद्युदात्तत्वम्] ''होता'' होम-निष्पादकः ''मन्द्रः'' हृष्टः* ''वरेण्यः'' वरणीयः [वृञ एण्यः (उ० ३, ९८) वृषादित्वादाद्युदात्तत्वम्] एवं विशिष्टोऽग्निः "नः" अस्माकं "प्रियः" "अस्तु" भवतु। "वयम्" अपि "स्वग्नयः" शोभनाग्नि-युक्ताः [बहुव्रीहौ ''नञ्सुभ्याम् (६, २, १७२)''—इति उत्तरपदान्तोदात्तत्वम्] एवम्भूतः अतस्तव प्रिया भूयास्मः इति शेषः॥ ३॥ १

अथेन्द्रं वइति त्यृचं द्वितीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ १

इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः।

३ १ २ ३ १ २

अस्माकमस्तु केवलः॥ १ †॥

हे ऋत्विग्यजमानाः "विश्वतः" सर्व्वेभ्यः जनेभ्यः "परि" उपरि अवस्थितः "इन्द्रं" "वः" युष्मदर्थं‡ "हवामहे" आह्वयामः। अतः स इन्द्रः "अस्माकं" "केवलः" साधारणः "अस्तु" इतरेभ्यो-ऽप्यधिकमनुग्रहमस्मासु करोत्वित्यर्थः [इन्द्रं—रन् प्रत्ययान्तः (उ० २, २८), नित्त्वादाद्युदात्तः (६, १, १९७)॥ १॥

---

* 'मन्द्रः—दीप्तः'—इति वि०।

† ऋ० वे० १, १, १४, ५।

‡ 'वः—बहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम्, इन्द्रं त्वाम्'—इति वि०।

अथ द्वितीया।

१ २ ३ १ २ ३ १२ ३१ ३ २ ३
सनो वृषन्नमुं चरुꣳ सत्रादावन्नपा वृधि।
२ ३ २ ३ १ २
अस्मभ्यमप्रतिष्कुतः॥ २ *॥

हे "सत्रादावन्" अस्मदभीष्ट-फलानां सर्वेषां सह प्रदातः! [ "आतो मनिन् क्वनिब्वनिपश्च (३, २, ७४)"—इति वनिप्, "आमन्त्रितस्य च (६, १, १९८)"—इत्याद्युदात्तत्वम्, पादादित्वान्न निघातः (८, १, १९)] अतः कारणात् व्रीह्यादि-निष्पत्त्यर्थं हे "वृषन्" वृष्टि-प्रदेन्द्र! [आमन्त्रित-निघातः (८, १, १९)] "नः" अस्मदर्थम् "अमुं" "दृश्यमानं "चरुं" मेघं [चरतीति चरुः† "भृ-मृ-शीत्यादिना (उ० १, ७) उ-प्रत्ययः, प्रत्यय-स्वरेणान्तोदात्तः] "अपावृधि" उद्घाटय [वृञ् वरणे (स्वा० उ०), लोटः सिप्, तस्य "सेर्ह्यपिच्च (३, ४, ८७)"—इति हि, "स्वादिभ्यः श्नुः (३, १, ७३)", तस्य "बहुलञ्छन्दसि (२, ४, ७३)"—इति लुक् "श्रु-शृ-णु पृ-कृ-वृभ्यश्छन्दसि (६, ४, १०२)"—इति हेर्धिरादेशः, तस्य ङित्त्वात् पूर्वस्य गुणाभावः, निघातश्च, उद्घाटयेत्यर्थः] तथैव "अस्मभ्यम्" अस्मच्छब्दात् "भ्यसोभ्यम् (७, १, ३०)"—इति भ्यमादेशः, "शेषे-(७,२,९०)"—इति तदो लोपः, "बहुवचने झल्येत् (७,३,१०३)" —इत्येत्वं न भवति "अङ्गवृत्तेः पुनर्वृत्तावविधिर्निष्ठितस्य"—

---

* ऋ० वे० १, १, १४, १।

† "चरुर्मेघो भवति चरतेर्वा समुच्चरन्त्यस्मादापः"—इति निरु० नै० ६, ११।

इत्युक्तम्। प्रातिपदिक-स्वरेण स्मेत्यकार उदात्तः। "भ्यसोऽभ्यम् (७,१,३०)"—इत्यभ्यमादेश-पक्षे "शेषे लोपः (७,२,९०)"—इति मपर्य्यन्त-शेषस्यादशब्दस्य लोपः, तदा उदात्त-निवृत्तिस्वरेण अभ्यमआदेरकारस्य उदात्तत्वम्] अस्मदर्थम् "अप्रतिष्कुतः" प्रतिशब्द-रहितः केनचिदप्रतिशब्दितः [कुङ् शब्दे (भ्वा०आ०) "निष्ठा (३, २, १०२)"—इति कर्म्मणि क्त-प्रत्ययः, प्रतेः प्राक् प्रयोगः, पारस्करादेराकृतिगणत्वात् (६, १, १५७) सुडागमः, सुषामादेराकृतिगणत्वात् (८, ३, ९८) षत्वम्, नञ्-समासे अव्यय-पूर्वपद-प्रकृतिस्वरत्वम् (८, २, २), यद्यदस्माभिर्याच्यते तत्र सर्वत्र नेति प्रतिशब्दं नोच्चारयति अतोऽस्मद्विषये कदाचिदप्यस्खलिताः। एतदेवाभिप्रेत्य यास्कआह—"अप्रतिष्कुतो अप्रतिस्खलितो-वा (निरु० नै० ६, १६)"—इति ] ॥ २ ॥

अथ तृतीया।

१ २ ३१२ ३ १ २ ३ १ १ २ ३ १ १ २
वृषायूथेवव्ँसगः कृष्टीरियर्त्त्योजसा।

१ २ ३ १ २
ईशानो अप्रतिष्कुतः ॥ ३* ॥ २

"वृषा" कामानां वर्षिता इन्द्रः "ओजसा" स्वकीयेन बलेनानुगृह्णीतुं "कृष्टीः" मनुष्यान्† "इयर्त्ति" प्राप्नोति‡। कीदृशइन्द्रः? "ईशानः" समर्थः "अप्रतिष्कुतः" प्रतिशब्द-

* ऋ० वे० १, १, १४, ३।

† 'कृष्टिः—कारयिता द्विजः'—इति वि०।

‡ 'इयर्त्ति—आगच्छति'—इति वि०।

रहितः याच्यमानं न परिहरतीत्यर्थः। इन्द्रस्य दृष्टान्तः— "वंसगः" वननीय गतिर्वृषभः "यूथेव" गो-यूथानि यथा प्राप्नोति तद्वत् [ यूथाइव—युवन्ति मिश्रीभवन्तीति यूथानि, यु मिश्रणामिश्रणयोः (अदा० प०), "तिथ-पृष्ठ-गूथ-यूथ-प्रोथाः (उ०२,१२)"—इति क्थ-प्रत्ययान्तो निपातितः, निपातनाद्दीर्घत्वम्, प्रत्ययस्वरेण अकारउदात्तः ( ३, १, ३ ), "शेश्छन्दसि बहुलम् (६,१,७०)"—इति शे-लुक् "इवेन विभक्त्यलोपः पूर्वपद-प्रकृतिस्वरत्वं च वक्तव्यम् (२,४,७१वा०)"—इति समासेऽपि स एव स्वरः ॥ ३ ॥ २

त्वन्नश्चित्रइति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ ३ १उ १ १ २
त्वन्नश्चित्रऊत्यावसोराधाꣳसिचोदय।

३ २ ३ १र १र ३ १ २ ३ २ ३ २ ३ १र १र
अस्यरायस्त्वमग्नेरथीरसिविदागाधन्तुचेतुनः ॥ १ * ॥

हे "वसो" वासकाग्ने! "चित्रः" दर्शनीयस्त्वम् "ऊत्या" रक्षया सह "राधांसि" धनानि "नः" अस्मभ्यं "चोदय" प्रेरय "अस्य" लोके परिदृश्यमानस्य "रायः" धनस्य त्वं "रथीः असि" रंहिता नेता भवसि अतः कारणात् अस्मभ्यं धनानि प्रेरयेत्यर्थः। अपिच "नः" अस्माकं "तुचे" [अपत्य-नामैतत् निघ० २, २, १) अपत्याय अपतन-हेतुभूताय पुत्रादये "गाधं" प्रतिष्ठां "तु" क्षिप्रं "विदाः" लम्भय ॥ १ ॥

* ऋ० आ० १, १, ३, ७ (१ भा० १६०पृ०)=ऋ० वे० ४, ८, २, ४।

अथ द्वितीया ।

१ २ ३ १२ ३२ ३ २ ३१२ ३२ ३ १ २
पर्षि तोकन्तनयम्पर्त्तृभिष्ट्वमदब्धैरप्रयुत्वभिः ।
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अग्ने हेडाꣳसि दैव्या युयोधि नोऽदेवानि ह्वराꣳसि च ॥२*॥३

हे "अग्ने !" त्वम् अदब्धैः केनाप्यहिंसितैः "अप्रयुत्वभिः" अपृथग्भूतैः [ यौतिरत्र पृथग्भावार्थः ] सहितैः "पर्त्तृभिः"† पालन-साधनैः "तोकं" पुत्रं "तनयं" पौत्रं च "पर्षि" पालय "दैव्या" देव-सम्बन्धीनि च "हेडांसि" क्रोधान् "नः" अस्मत्तः "युयोधि" पृथक् कुरु ॥ २ ॥ ३

१ र र १ २ र
॥ वारवन्तीयम् ॥ तुवन्नश्चा औहोवाहायि । आजता२३४
५ २र र र र १ ५ १ र
या । वसोराधाꣳसिचोदायो२३४वायि । अस्यरायस्त्व
र र २ ३र ४र ५ १ ३ ५ २ ३
मग्नेरथीरा३४औहोवा । इहा२३४वायि । उक्तवा२३४
५ २१र २र १ ० र २ ३र ४र ५ १ २
सायि । विदागा । धान्तुचेतू३४ । औहोवा । इहा
५ ३र १ ५र ५
२३४वायि । औहो३१२३४ । नाः । एहियाद्दहा ॥(१)

* ऋ० वे० ३, ८, २, ५ ।

† 'पर्त्तृभिः—छान्दसो रेफलोपः तृतीयाबहुवचनश्चेदं पर्तृभिः'—इति वि० ।

२ र र र र १ २ ७ ५ २ र र
विदागाधाऔहोहायि। तूचायितू२३४नाः। विदागाध
र १ ५ ५ र २
न्तुचेतूनो२ ३ ४हायि। पर्षितोकन्तनयमर्तृभिष्टू३ ४।
३र ४र ५ २ १ ५ १ २
औहोवा। पर्षायिता२३४हा। कन्तन्नयंयर्तृभिष्टू३४।
३र ४र ५ १ ३ ५ २ ३ ५ २ १
औहोवा। इहा२३४हायि। उऊवा२३४वाम्। अद
२र १ ७ २ ३र ४र ५ १ ३ ५
ब्धैः। आप्रयुत्वा३४। औहोवा। इहा २ ३ ४ हायि।
३र २ ५र ५ २ र र र
औहो३१२३४। भोः। एहिया६हा॥(२) अदब्धैराऔ
१ २ ३ ५ २ र १
होहायि। प्रायुत्वा२३४भाम्भि। अदब्धैरप्रयुत्वाभो२३४
५ १ र र र र र र र ३र ४र ५ २
हायि। अग्नेहेडा॰सिदैव्यायुयोधा३४। औहोवा। अ
१ ५ १र र र र १ ३र
ग्नायिहा२३४यिहायि। डा॰सिदैव्यायुयोधा ३ ४। औ
४र ५ १ ३ ५ २ ३ ५ २ १र ५
होवा। इहा२३४हायि। उऊवा२३४नाः। अदेवा।
१ ७ र २ ३र ४र ५ १ ३ ५ ३र
नायिह्नरा॰सा३४। औहोवा। इहा२३४हायि। औ
२ ५र ५ ४
हो३१२३४। चा। एहिया६हा। हो५ई। डा(३)॥६*॥[१]३

* ऊ० गा० १२प्र० २अ० ६सा०।

अथ किमित्तइति त्वचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१र २र ३२३२३
किमित्तेविष्णोपरिचक्षिनाम*
१र २र ३१२ ३१२
प्रयद्दवक्षेशिपिविष्टोअस्मि।
१र २र ३१र २र ३२उ
मावर्पोअस्मदपगूहएत
३१२ ३२३१२
द्यदन्यरूपःसमिथेबभूथ॥ १ †॥

[पुरा खलु विष्णुः स्वरूपं परित्यज्य कृत्रिमं रूपान्तरं धारयन् सङ्ग्रामे वसिष्ठस्य साहाय्यं चकार। तं जानन् ऋषिः अनया प्रत्याचष्टे। अत्र निरुक्तम्—"शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः। कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः। * * *॥ किन्ते विष्णोऽप्रख्यातमेतद् भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिरपि वा प्रशंसा-नामैवाभिप्रेतं स्यात्। किन्ते विष्णोः प्रख्यातमेतद्भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्न-रश्मिः शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवति। मावर्पो अस्मदपगूह एतत्। वर्प इति रूप नाम वृणोतीति सतः। यदन्यरूपः समिथे सङ्ग्रामे भवसि

* "परिचक्ष्यभूत्"—इति ऋ०-पाठः।

† ऋ० वे० ५, ६, २५, ६।

संयत-रश्मिः (निरु० नै० ५, ८)"—इति] तत्र कुत्सितार्थ-पक्षे योजना—हे "विष्णो!" "ते" तव तत् "नाम" "किं" "परिचक्षि" प्रख्याप्यं भवतीति शेषः [किं शब्दः क्षेपे। अप्रख्याप्यमेव तद्भवति] "यत्" नामास्मभ्यं "प्र ववक्षे" प्रब्रूषे "शिपिविष्टो अस्मि"—इति [अन्तर्णीतोपमानमेतत्। शेप इव निर्वेष्टितः तेजसा अप्राच्छादितो भवामीति अश्लीलार्थ-वादिनीदं नाम न प्रशस्तमित्यर्थः। यद्वा, परिपूर्व्वो चक्षिर्वर्जनार्थः तन्नाम किं चक्षि परिचक्ष्यं परिवर्जनीयं परित्याज्यं विरुद्धार्थ-प्रतिपादकत्वात् स्रतएव परित्यक्तं हि तत्। शिष्टं समानं पूर्वेण]। अन्यम् उक्त-रूप-विलक्षणं यद् वैष्णवं रूपमस्ति "एतद्" "वर्पः" रूपम् "अस्मत्" अस्माकं "मा अप गूहः" अवगूढं संवृतं मा कुरु [गूहू संवरणे (भ्वा० उ०)] अपितु तदेव रूपं प्रकटयति। वैष्णवस्य रूपस्य गूहने का प्रसक्तिरिति चेत्—"यद्"यस्मात् त्वम् "अन्यरूप इत्" रूपान्तरमेव धारयन् "समिथे" सङ्ग्रामे "बभूथ" अस्माकं सहायो भवसि तस्मात् त्वयेदं गूहनं न कार्य्यमिति॥ प्रशंसा-पक्षे तु—हे विष्णो! "ते" तव तत् "नाम" "किं" "परिचक्षि" प्रख्यातं भवति? न प्रख्यापनीयं स्रतएव प्रख्यातम्, अप्रख्यातम् प्रख्यापनीयम्। किं तन्नाम? "शिपिविष्टो अस्मि" आविष्टोऽस्मीति यन्नाम "प्रब्रूषे"। यत एवं प्रख्यातरूपस्त्वमतोऽस्माद् कामनाद् वैष्णवं रूपं संवृत्तं मा कार्षीः। इदानीं गूढरूपोऽपि "यद्" यस्मात् त्वं गूढोऽपि त्रायसएवेति व्यर्थमेव तस्य रूपस्य गूहनं "समिथे" सङ्ग्रामे "अन्यरूपः" कृत्रिम-रूपाद् यदन्यद् वैष्णवं रूपं शौर्यादि-लक्षणं तादृग्रूप एव "बभूथ" भवति।

अथ चतुर्थे सूक्ते तृतीया।

३ १२ २२ ३ १२
असौया सेनामरुतःपरेषा

३ १ २३ १ २ ३ १२
मभ्येतिनओजसास्पर्द्धमाना।

१ २ ३२३१ २ ३
ताङ्गूहततमसापव्रतेन

२३१२ ३ २ ३ २ ३ २
यथैतेषामन्योअन्यन्नजानात्॥ ३ *॥ ४

[अप्रतिरथस्त्रिष्टुम्मरुतः।] "असौ या सेना:" हे "मरुतः!" "परेषां शत्रूणाम् "अभ्येति" अभिमुखा एति "नः" अस्मान् प्रति "ओजसा" बलेन "स्पर्द्धमाना", "तां" सेनां "गूहत" व्यापृत "तमसा" "अपव्रतेन" [व्रतमिति कर्मनाम (निघ० २, १, ७)] अपगत-कर्मणा [येन तमसा] व्याप्ता नश्यन्ति कर्माणि तदपव्रतं तमः, तेनापव्रतेन तमसा तथा गूहत "यथा एतेषां" योद्धा "अन्योन्यं न जानात्" परस्परं न जानातीत्यर्थः† ॥ ३ ॥ ४

---

* ऋ० वे० ८, ५, २३, ८ = य० वे० १७, ४७।

† 'मरुद्देवत्या त्रिष्टुप् हे मरुतो या प्रसिद्धा असौ परेषां शत्रूणां सेना नोऽस्मानभिमुखा एति अभ्यागच्छति। कीदृशी ओजसा बलेन स्पर्धमाना स्पर्धां कुर्वाणा तां सेनां तमसा अन्धकारेण यूयं गूहत संवृतां कुरुत। तथा गूहत यथा असौ सैनिका अन्योऽन्यं न जानन् परस्परं न जानीयुस्तथा गूहत। कीदृशेन तमसा अपव्रतेन अपगतं व्रतं कर्म यस्मात्तेन येन व्याप्तानां कर्म नश्यति तादृशेन तमसा गूहतेत्यर्थः।"—इति म० कृ० व्या०।

अथ पञ्चमे सूक्ते प्रथमा ।

३ १ २ ३ १ २ ३ १२ ३ १ २ ३१२
अमीषाञ्चित्तम्प्रतिलोभयन्तीगृहाणाङ्गान्यप्वे परेहि ।
३ २उ ३ १ २ ३ १र २र
अभिप्रेहिनिर्दह हृत्सुशोकै
३२ ३२ ३ १२
रन्धेनामित्रास्तमसासचन्ताम् ॥ १ * ॥

[अप्रतिरथस्त्रिष्टुब्वायुः ।] हे "अप्वे" पापाभिमानि देवते !† "अमीषां" योद्धृणां "चित्तं" "प्रतिलोभयन्ती" विमोहयन्ती सती "अङ्गानि" तेषामवयवान् शरादिकान् "गृहाण" स्वीकुरु । ते "अमित्राः" अस्मच्छत्रवः "अन्धेन तमसा" "सचन्तां" सङ्गच्छन्ताम्‡ ॥ १ ॥

---

* ऋ० वे० ८, ५, २३, ६ = य० वे० १७, ४४ ।

† "अप्वा यदेनया विद्धो ऽपवीयते व्याधिर्वा भयं वा"—इति निरु० नै० ६, १२ ।

‡ अत्राह यास्कः—अमीषां चित्तानि प्रज्ञानानि प्रतिलोभयमाना गृहाणाङ्गान्यप्वे परेह्यभिप्रेहि निर्दहैषां हृदयानि शोकैरन्धेनामित्रास्तमसा संसेव्यन्ताम्"—इति (निरु० दै० ३, ३२)

"अप्वा देवता सा व्याधिर्भयं वा यस्मादेतया विद्धोऽपवीयते तस्मादप्वा अपपूर्वाद्वातेरन्तर्भूतण्यर्थात् अन्येष्वपि दृश्यतऽइति उप्रत्ययः अपशब्दान्त्याकारलोपश्छान्दसः ततष्टाप् अपवाति अपगमयति सुखं प्राणांश्चेत्यप्वा । ऐन्द्रोऽभिरूपा द्वादश भवन्तीति (९, २, ३, ६) श्रुतेरियमप्येन्द्रसेनासम्बन्धिनी । हे अप्वे अमीषां शत्रूणां चित्तं चित्तानि प्रतिलोभयन्ती मोहयन्ती अङ्गानि शत्रुगात्राणि गृह्णाना ततः परेहि अङ्गान्यादाय परागच्छ पुनरन्यान् रिपून् गृहीतुमभि शत्रुसङ्घं प्रेहि प्रगच्छ तेषां हृत्सु हृदयानि शोकैर्धनपुत्रनाशादिनिमित्तैर्निर्दह विभक्तिव्यत्ययः । किञ्च अमित्राः शत्रवोऽन्धेन तमसा गाढान्धकारेण सचन्तां सङ्गच्छन्तां षच् समवाये लोट् ।"—इति म० क० व्या० ।

अथ पञ्चम-सूक्ते द्वितीया।

२ ३ १ २ ३ १ २ ३ १ २
प्रेताजयतानरइन्द्रोवःशर्मयच्छतु।

३ १ २ ३ १ २ ३ १र २र
उग्रावःसन्तुबाहवोनाधृष्यायथासथ॥ २ *॥

[अप्रतिरथोऽनुष्टुबिन्द्रो मरुतो वा।] हे "नरः" नेतारः! सङ्ग्रामस्य निर्वोढारो योद्धारः! "प्रेत" प्रकर्षेण गच्छत। गत्वा च "जयत" तान् प्रतिभटान् [तिङ्-परत्वात् 'तिङ् तिङः (८, १, २८)'—इति निघाताभावः "वः" युष्माकम् "इन्द्रः" "शर्म" सुखं "यच्छतु" प्रयच्छतु "वः" बाहवः "उग्राः" उद्गूर्ण-बलाः "सन्तु" भवन्तु। "अनाधृष्याः" अन्यै रनभिभाव्याः "यथा" यूयम् "असथ" भविष्यथ तथा उग्राः सन्तु वो बाहवः† ॥ २ ॥

* ऋ० वे० ८, ५, १९, ७ = य० वे० १७,४६।

† "योद्धदेवत्यानुष्टुप् योद्धन् स्तौति। हे नरोऽस्मदीया योद्धारो यूयं प्रेत परसैन्यं प्रति प्रकर्षेण गच्छत ततो जयत विजयं प्राप्नुत द्व्यचोऽतस्तिङ इति। प्रेतेत्यत्र दीर्घः अन्येषामपि दृश्यतऽइति जयतेत्यत्र दीर्घः। इन्द्रो वो युष्मभ्यं शर्म जयोत्थं सुखं यच्छतु ददातु दाण दाने पाघ्रेत्यादिना यच्छादेशः। किञ्च यथा यूयमनाधृष्या असथ केनाप्यतिरस्कार्या भवथ। तथा वो युष्माकं बाहवो भुजदण्डा उग्रा उद्गूर्णायुधा सन्तु। असथेत्यत्र लेटोऽडाटाविति अडागमः।"—इति मं० का० व्या०।

अथ पञ्चम-सूक्ते तृतीया।

१ २   ३ १ २   ३ १ २ ३ १ २
अवसृष्टा परापत शरव्ये ब्रह्मसंशिते।
२ ३   २ ३   १ २   ३ २उ   ३ २ ३ १ २
गच्छामित्रान्प्रपद्यस्व मामीषां कञ्चनोच्छिषः॥ ३ * ॥ ५

[अप्रतिरथऋषिः पायुर्वा भारद्वाजः अनुष्टुप् छन्दः इषुर्देवता।] "ब्रह्मसंशिते" मन्त्रेण तीक्ष्णीकृते हे "शरव्ये" हिंसाकुशले! इषो! त्वम् "अवसृष्टा" चिप्ता "परा पत" परागच्छ। इतो देशात् गत्वा च "अमित्रान्" हिंसकान् "प्रपद्यस्व" प्राप्नुहि च। "अमीषाम्" अमित्राणां मध्ये "कञ्चन" कञ्चिदपि "मा उच्छिषः" अवशिष्टं मा कुरु† ॥ ३ ॥ ५

अथ षष्ठे सूक्ते प्रथमा।

३ १   २ ३ १ २   ३ २   ३
कङ्काः सुपर्णा अनुयन्त्वेनान्
१ २   ३ १ २ ३   १ २ ३ १ २
गृध्राणामन्नमसावस्तु सेना।

---

* ऋ० वे० ५, १, २२, १ = य० वे० १७, ४५।

† "इत ऋक्चतुष्टयस्य विनियोगः कात्यायनेनोक्तः। इयमिषुदेवत्यानुष्टुप्। हिंसिका शरमयी हेतिः शरव्या ब्रह्मणा मन्त्रेण संशिता तीक्ष्णीकृता ब्रह्मसंशिता तादृशि हे शरव्ये त्वमवसृष्टास्माभिर्मुक्ता सती परापत सहसा परसैन्ये पतिता भव। पतित्वा चामित्रान् शत्रून् गच्छ प्राप्नुहि प्राप्य च प्रपद्यस्व शत्रुशरीरेषु प्रविश प्रविश्य चामीषां शत्रूणां मध्ये कं चन पुरुषं मा उच्छिषः अवशिष्टं मा कुरु सर्वानपि जहीत्यर्थः शिषॢ विशेषणे पुषादीत्यादिना च्लेरङ्।" —इति म० कृ० व्या०।

१ २ ३ २ ३ २ ३
मैषाम्मोच्यघहारश्चनेन्द्र

१ २ ३ १ २ ३ १ २
वया८ंस्येनाननुसंयन्तु सर्वान्॥ १ *॥

[अप्रतिरथऋषिः पायुर्वा भारद्वाजः, त्रिष्टुप् छन्दः, इन्द्रो देवता।] "कङ्काः" नाम पक्षिणः क्रव्यादाः "सुपर्णाः" शोभनपतनाः "अनु यन्तु" "एतान्" शत्रून्। "गृध्राणाम् अन्न" पक्षिणां भक्षभूता "असौ" "अस्तु" सेना। "मा एषां मोचि" एतेषां मा कश्चित् मुच्यताम्। "अघहारश्चनेन्द्र" हे इन्द्र! योऽपि नितरां पापीयान् अतिप्रत्यवरः सोऽपि न मुच्यतां मृत्योः। "वयांस्येनान्" वयांसि पक्षिरूपाणि क्रव्यादादीनि "अनु संयन्तु सर्वान्" अनु पश्चात् यन्तु सर्वान् शत्रून्॥ १ ॥

अथ षष्ठे द्वितीया।

३ १ २ ३ १ ३ ३ २ ३ २
अमित्रसेनाम्मघवन्नस्माञ्छत्रुयतीमभि।

३ १र २र ३ १ २ ३ १ २
उभौतामिन्द्रवृत्रहन्नग्निश्चदहतम्प्रति॥ २ †॥

[अप्रतिरथऋषिः अग्निर्वा, अनुष्टुप् छन्दः, इन्द्राग्नीदेवते।] "अमित्रसेनां" हे "मघवन्!" "अस्मान्" "शत्रुयतीमभि"

---

* नेयमन्यत्र श्रूयते।

† अस्याप्यन्यत्र न श्रुतिः।

शत्रुभिः परिवारिताम् "उभौ" "तां" सेनां हे "इन्द्र!" "वृत्रहन्!" त्वञ्च "अग्निश्च" "प्रति दहतम्" भस्मीकुरुतमित्यर्थः॥ २॥

अथ षष्ठे सूक्ते तृतीया।

१ २ ३ २ ३ १ २　　३ १ २ ३१ २
यत्रबाणाःसम्पतन्तिकुमाराविशिखाइव।
१ २३ १ २ ३ २ ३ १ २ ३ १ २
तत्रनोब्रह्मणस्पतिरदितिःशर्म्मयच्छतु।
३ २ ३ १ २
विश्वाहाशर्मयच्छतु॥ ३ *॥ ६

[अप्रतिरथऋषिः पायुर्भारद्वाजः, पङ्क्तिश्छन्दः, ब्रह्मणस्पतिरदितिश्च देवता।] "यत्र" सङ्ग्रामे "कुमारा विशिखा इव" मुण्डिता इव] "बाणाः सम्पतन्ति"। "तत्र" "नः" अस्मभ्यं "ब्रह्मणस्पतिः" "शर्म" सुखं "विश्वाहा" सर्वदा "यच्छतु"। "अदितिः" च सर्वदा "शर्म यच्छतु"। द्विरुक्तिरादरार्था॥ ३॥ ६

---

* ऋ० वे० ५, १, २२, २ = य० वे० १७, ४८।

† "इन्द्रबृहस्पत्यदिति देवत्या पङ्क्तिरष्टाचरपञ्चपादा। यत्र यस्मिन् युद्धे बाणाः शत्रुप्रयुक्ताः सम्पतन्ति इतस्ततश्च सम्भूय पतन्ति। तत्र दृष्टान्तः कुमारा विशिखा इव विगता शिखा येषां ते विशिखाः शिखारहिता मुण्डितमुण्डा विकीर्णकवचा वा अतिबाला चपलाः सन्तो यथा इतस्ततो गच्छन्ति तद्वत्। तत् तत्र युद्धे इन्द्रः नोऽस्मभ्यं शर्म विजयोत्थं सुखं यच्छतु ददातु। कीदृश इन्द्रो बृहस्पतिः बृहतां मन्त्राणां

अथ सप्तमे सूक्ते प्रथमा।

१उ ३ १र २र ३ २ ३ २ ३ १ २

वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज।

२ ३ १ २ ३ १ २ ३ १ २

वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासतः॥ १ *॥

[अप्रतिरथ ऋषिः शासो भारद्वाजो वा, अनुष्टुप् छन्दः, इन्द्रो देवता।] हे "इन्द्र!" "रक्षः" राक्षस-जातं "विजहि" विनाशय। "मृधः" सङ्ग्राम-कारिणः शत्रूंश्च "वि" जहि। "वृत्रस्य" आवरकस्यासुरस्य "हनू" कपोल प्रान्तौ "विरुज" विशेषेण भग्नौ कुरु। हे "वृत्रहन् इन्द्र!" "अभि दासतः" अस्मानुपक्षपयतः "अमित्रस्य" शत्रोः "विमन्युं" क्रोधमपि विनाशय॥ १॥

अथ सप्तमे सूक्ते द्वितीया।

१ २ ३ १ २ ३ १ २ ३ २

वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः।

२ ३ १ २ ३ २ ३ १ २ ३ १ २

यो अस्माँ अभिदासत्यधरं गमया तमः॥ २ †॥

---

पतिः पालकः विजयोचितमन्त्रज्ञः। अदितिः नास्ति दितिः खण्डनं यस्य अखण्डित-शक्तिः। विश्वाहा विश्वान्सर्वान् शत्रून् समन्तादहन्तीति विश्वाहा स शर्म यच्छतु इति पुनरुक्तिरादरार्था। यद्वा तव इन्द्रः बृहस्पतिरिन्द्रगुरुः अदितिरिन्द्रमाता च विश्वाहा सर्वाण्यहानि सर्वदा शर्म यच्छतु विश्वानि च तान्यहानि च विश्वाहा विभक्तेराकारः अत्यन्तसंयोगे द्वितीया।"—इति स० स० व्या०।

* ऋ० वे० ८, ८, १०, ३।

† ऋ० वे० ८, ८, १०, ४ = य० वे० ८, ४४—१८, ७०।

[अप्रतिरथऋषिः, अनुष्टुप् छन्दः, इन्द्रो देवता।] हे "इन्द्र!" "नः" अस्माकं "मृधः" सङ्ग्राम-कारिणः शत्रून् "वि जहि" विनाशय। तथा "पृतन्यतः" पृतनाः सेनाश्चात्मन इच्छतः युयुत्समानानपि "नीचा यच्छ" नीचोनमवाङ्मुखं यच्छ गमय। "यः" शत्रुः "अस्मान्" "अभि दासति" अभितः उपक्षपयति, तम् "अधरं" निकृष्टं "तमः" अन्धकारं मरणलक्षणं "गमय" प्रापय * ॥ २ ॥

अथ सप्तम-सूक्ते तृतीया।

१ २   ३ १र   २र ३ १ २
इन्द्रस्यबाहूस्थविरौयुवाना

३ १ २ १ १ २ ३ २
अनाधृष्यौसुप्रतीकावसह्यौ।

---

* "का० (१३, २, १७) प्रचं गृह्णाति वि न इन्द्र वाचस्पतिं विश्वकर्म्मन्निति वेति। गवामयनस्योपान्त्ये महाव्रतेऽहनि प्राजापत्यपशूपालम्भादूर्ध्वं मैन्द्रग्रहग्रहणे मन्त्रत्रयम् समायः। इन्द्रदेवत्यानुष्टुप् शासदृष्टा। हे इन्द्र नोऽस्माकं मृधः शत्रून् संग्रामान्वा विजहि विशेषेण नाशय। किं च पृतन्यतः नीचा यच्छ पृतनां संग्रामं सेनां वा इच्छन्ति ते पृतन्यन्तीति पृतन्यन्तस्तान् सुप आत्मनः क्यजिति। पृतनाशब्दात् क्यचि प्रत्यये कव्यध्वरपृतनस्यर्चि लोप इति टिलोपे शतृ-प्रत्यये च रूपम् पृतन्यतः सेनामिच्छतः शत्रून् नीचान्यग्भूतान्यच्छ निगृहीत्वा युद्धादुपरतान् कुर्वित्यर्थः। किं च पश्चात् योऽस्मानभिदासति दसु उपक्षये उपक्षयति तं शत्रुमधरं निकृष्टं तमो नरकं गमय प्रापय संहितायां दीर्घः। हे ग्रह त्वमुपयामेन गृहीतोऽसि विमृधो मृतो संग्रामो यस्य तस्मै विमृधे विशिष्टसंग्रामवते इन्द्राय त्वां गृह्णामि। सादयति एष तव योनिः विमृध्वनिविशिष्टायेन्द्राय त्वां सादयामि।

१ २ ३ २उ १ १ २ ३
तौयुञ्जीतप्रथमौयोगआगते

१ २ ३ १र २र ३ १२ ३२
याभ्याञ्जितमसुराणाꣳसहोमहत् ॥ ३ * ॥ ७

[अप्रतिरथऋषिः, इन्द्रो देवता, विराट्जगतीच्छन्दः]"इन्द्रस्य बाहू" "स्थविरौ" स्थिररूपौ [अथवा स्थविरौ स्थूलौ] "युवानौ" जरया न ग्रसितौ, "अनाधृष्यौ" न केनचिद्धृते, "सुप्रतीकौ" स्वाकृती हस्ति-कराकारौ, "असह्यौ" न कश्चित् सोढुं शक्तौ, "तौ युञ्जीत, प्रथमे योगे आगते" योगे सङ्ग्रामे यत्र नियुज्यन्ते बाहवः, "याभ्यां" "जितम्" "असुराणां" स्वभूतं "सहः" बलं "महत्" ॥ ३ ॥ ७

अथाष्टमे सूक्ते प्रथमा।

१ २ ३ १ ३ ३
मर्म्माणितेवर्म्मणाच्छादयामि

३ २ ३ २ ३ २ ३ १ २
सोमस्त्वाराजामृतेनानुवस्ताम्।

३ १र २र ३ १ २ ३
उरोर्वरीयोवरुणस्तेकृणोतु

१ २ ३ १ २ ३ १ २
जयन्तन्त्वानुदेवामदन्तु ॥ १ † ॥

---

* नान्यत्रेयं दृश्यते।

† ऋ० वे० ५, १, ११, १ = य० वे० १७, ४९।

[अप्रतिरथऋषिः, पायुर्वा भारद्वाजः, त्रिष्टुप् छन्दः, सोमो देवता वरुणश्च देवता।] हे राजन्! "ते" त्वदीयानि "मर्माणि" [येषु स्थानेषु विद्धः सद्यो म्रियते, तानि मर्माणि] "वर्मणा" कवचेन छादयामि "सोमः राजा" "त्वा" त्वाम् "अनु" छादनानन्तरम् "अमृतेन" "वस्ताम्" आच्छादयन्तु। "वरुणः" अपि "ते" तुभ्यं "उरोर्वरीयः" उरु-तुल्यं सुखं "कृणोतु" करोतु। "जयन्तं" "त्वा" त्वां "देवाः" सर्वेऽपि "अनु मदन्तु" अनुहृष्यन्तु * ॥ १ ॥

अथाष्टमे सूक्ते द्वितीया ।

३ १ २ ३ १ २
अन्धा अमित्राभवताशीर्षाणोहयइव ।
१ २ ३ १ १ ३ १ २ ३ १ २
तेषांवोअग्निनुन्नानामिन्द्रोहन्तुवरंवरम् ॥ २ † ॥

---

* "का० (१३, ३, १०) मर्माणि तऽइति कवचं प्रयच्छति । महाव्रते यागेऽध्वर्युः क्षत्रियाय सन्नाहं परिधानाय प्रयच्छतीर्थः। सोमवरुणदेवदेवत्या त्रिष्टुप्। हे यजमान ते तव मर्माणि जीवस्थानानि वर्मणा कवचेनाहं छादयामि आवृणोमि। राजा विप्रादीनामधिपः सोमोऽमृतेन नास्ति मृतं मरणं येन तेन मरणनिवारकेणानेन वर्मणा त्वा त्वामनुवस्तामन्वाच्छादयतु वस आच्छादनेऽदादिः लोट् । तथा वरुणः ते तव वर्म उरोः पृथोरपि वरीयः उरुतरं प्रथीयः कृणोतु करोतु अत्यन्तमुरु वरीयः इयसुनि प्रस्थस्फेत्यादिना उरोर्वरादेशः। किं च देवाः जयन्तं विजयं प्राप्नुवन्तं त्वा त्वामनुमदन्तु अनुकूला भूत्वा हृष्यन्तु उत्साहयन्तु वा।"—इति म० छ० व्या० ।

† ऋ० वे० ८, ५, २३, ९ ।

[अप्रतिरथऋषिः, अनुष्टुप् छन्दः, इन्द्रो देवता।] हे "अमित्राः" शत्रवः! यूयम् "अन्धाभवत"। कीदृशा अन्धाः? "अशीर्षाणः अहय इव" यथा सर्पाः शीर्षच्छिन्नाः अकिञ्चित्कराः * भवन्ति तथा भवत। "तेषां" "वः" "अग्निमूढानाम्" अग्नि-दग्धानां शत्रूणाम् "इन्द्रः हन्तु वरं वरम्" यो यो वरिष्ठस्तं तं हन्तु नाशयन्तु ॥ २ ॥

अथाष्टमे सूक्ते तृतीया।

२ ३ १ २ ३ २ ३ १ ३ १ २
योनः स्वोरणो † यश्चनिष्ट्योजिघाꣳसति।
३ १२ २२ ३ १ ३ २ ३
देवास्तꣳसर्वंधूर्वन्तुब्रह्मवर्म्म
१२ २२३ २ ३ २ ३ १२ २२
ममान्तरꣳशर्म्मवर्म्ममान्तरम् ॥ ३ ‡ ॥ ८

[अप्रतिरथऋषिः पङ्क्तिच्छन्दः, विश्वेदेवा देवताः] "यः" "स्वः" ज्ञातिः "अरणः" अरममाणः, "यश्च" "निष्ट्यः" तिरोभूतः दूरेस्थितः "नः" अस्मान् "जिघांसति" हन्तुमिच्छति "तं" "देवाः सर्वे" "धूर्वन्तु" हिंसन्तु। "ब्रह्म" मन्त्रः "मम अन्तरम्" शराणां निवारकं "वर्म" विद्यते "शर्मवर्म" सन्नाहन-भूतः "मम अन्तरम्" अस्तु ॥ ३ ॥ ८

* "शीर्षाणा अहय"—इति वि०।

† 'स्वोअरण'—इति ऋ०-पाठः।

‡ ऋ० वे० ५, १, १२, ४।

अथ नवमे सूक्ते प्रथमा ।

१ २उ ३ १ १ ३ १ २ ३ १
मृगोनभीमःकुचरोगिरिष्ठाः
१ ३ २ ३ १ २ ३ १ २
परावतआजगन्था*परस्याः ।
३ २ ३ १ २ ३ १ २ ३ १
सृकꣳसꣳशायपविमिन्द्रतिग्मं
२र ३ १र २र
विशत्रून्ताढिविमृधोनुदस्व ॥ १ † ॥

[अप्रतिरथऋषिः, ऐन्द्रावायवः, त्रिष्टुप्छन्दः, इन्द्रो देवता । "कुचरः" कुत्सित-चरणः "गिरिष्ठाः" पर्वत-निवासी "मृगः न" सिंह इव । हे इन्द्र ! त्वं "भीमः" भयङ्करः असि । स त्वं "परस्याः" परावतः अतिशयेन दूरात् द्युलोकात् "आ जगन्थ" आगच्छ [गमेश्छान्दसे लिटि (३, २, १०५) क्रादि-नियम-प्राप्तेटः (७, २, १३) "उपदेशेऽत्वतः (७, २, ६२)"—इति प्रतिषेधः । आगत्य च "सृकं" सरण-शीलं "तिग्मं" तीक्ष्णं "पविं" वज्रं संशाय" सम्यक् तीक्ष्णीकृत्य "शत्रून्" अस्मदीयान् वैरिणः हे इन्द्र ! "ते" तव वज्रेण "वि ताढि" विशेषेण ताडयति नाशयतीत्यर्थः [तड़ आघाते ( चु० प०) अस्मात्सान्तात्लोटि

* "अगम्यात्"—इति अथ०-पाठः ।

† ऋ० वे० ८, ८, ३८, २ = य० वे० १८, ७१ = अथ० वे० ११, २३, ३ ।

रूपमेतत्। तथा "मृधः" सङ्ग्रामोद्युक्तान् युयुत्सून् अन्यानपि "वि मुदस्व" विशेषेण प्रेरय तिरस्कुरु* ॥ १ ॥

अथ नवमे सूक्ते द्वितीया।

३ १र २र
भद्रङ्कर्णेभिः शृणुयामदेवा

१ १ २ ३ १ २
भद्रम्पश्येमाक्षभिर्यजत्राः।

---

* "अत्रेदं यास्ककृतं व्याख्यानम्—"मृग इव भीमः कुचरो गिरिष्ठाः। मृगो मार्ष्टेर्गतिकर्मणो भीमो बिभ्यत्यस्माद्भीष्मो ऽप्येतस्मादेव। कुचर इति चरतिकर्म कुत्सितमथ चेद् देवताभिधानं क्वायं न चरतीति। गिरिष्ठा गिरिस्थायी गिरिः पर्वतः समुद्गीर्णो भवति पर्ववान्पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वार्धमासपर्व देवानस्मिन् प्रीणन्तीति तत्प्रकृतीतरत्सन्धिसामान्यान्मेघस्थायी मेघोऽपि गिरिरेतस्मादेव ॥ तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते तदुपरिष्टाद् व्याख्यास्यामो नैघण्टुकानि नैगमानीह।"—इति निरु० नै० १, २०।

† "अयदृष्टा चित्तु प् हे इन्द्र परस्याः परावतो दूरतराद्देशादाजगन्थ आगच्छ परावच्छब्दो दूरवचनः परावतः दूरदेशादित्यर्थः लोडर्थे लिट्। आगत्य च शत्रून्वितादि विशेषेण ताडय। मृधः संग्रामांश्च विनुदस्व विशेषेण प्रेरय दूरीकुरु। किं कृत्वा पविं वज्रं संशाय तीक्ष्णीकृत्य शो तनूकरणे ल्यप्। कीदृशं पविं सृकम् सरति शत्रुशरीरे गच्छतीति सृकः तम्। तिग्ममुत्साहवन्तम् "तिग्मं तेजतेरुत्साहकर्मण"-इति (निरु० १०, ६) यास्कः। क-इव मृगो न मृग-इव यथा मृगः सिंहो दूरादेत्य प्राणिनं हन्ति। कीदृशो भीमः भयङ्करः। कुचरः कुत्सितं चरति गच्छति कुचरः। गिरिष्ठाः गिरौ तिष्ठति गिरिष्ठाः पर्वताश्रयः। ताडयतिर्हिंसाकर्मा तस्य हौ परे छन्दस्युभयथेत्यार्धधातुकत्वे णिचो लोपः ऊम्यन्भ्यो हेर्धिः ष्टुत्वम् ताढि।"—इति च स० ऋ० व्या०।

३ १२ २२ ३ १ २ ३ १ ३क
स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभि

१२ ३ १ २ ३ १ २२
र्व्यशेमहि*देवहितंयदायुः ॥ २.† ॥

[अप्रतिरथऋषिः राहुगणो गौतमो वा, त्रिष्टुप् छन्दः, विश्वेदेवा देवताः।] हे देवाः। दानादि-गुण-युक्ताः सर्वे देवाः "कर्णेभिः" अस्मदीयैः श्रोत्रैः "भद्रं" भजनीयं कल्याणं वचनं शृणुयाम युष्मत्-प्रसादात् श्रोतुं समर्थाः स्याम; अस्माकं वाधिर्यं कदाचिदपि माभूत्। हे "यजत्राः" यागेषु चरु-पुरोडाशादिभिः यष्टव्याः देवाः "अक्षभिः" अक्षिभिः आत्मीयैश्चक्षुभिः "भद्र" शोभनं "पश्येम" द्रष्टुं समर्थाः स्याम; अस्माकं दृष्टि-प्रतिघातोऽपि माभूत्। "स्थिरैः" दृढ़ैः "अङ्गैः" हस्तपादादिभिः अवयवैः "तनूभिः" शरीरैश्च युक्ता वयं "तुष्टुवांसः" युष्मांस्तुवन्तः "यदायुः" षोड़शाधिक-शत-प्रमाणं विंशत्यधिक-शत-प्रमाणं वा "देवहितं" देवेन प्रजापतिना स्थापितं तत् "व्यशेमहि" प्राप्नुयाम [कर्णेभिः—बहुलञ्छन्दसि (७, १, १०)"—इति भिसऐसभावः। अक्षभिः—"छन्दस्यपि दृश्यते (७, १,७६)"—इत्यनङ् सचोदात्तः। यजत्रा—"अमि-नक्षि (उ० ३,१०५)"—इत्यादिना यजेरत्रन् प्रत्ययः। तुष्टुवांसः—ष्टुञ् स्तुतौ (अदा०

* "व्यशेम"—इति ऋ०-पाठः।

† ऋ० वे० १, ६, १६, ३ = य० वे० २५, २१।

प०), लिटः क्वसुः (३, २, १०७), "शर्पूर्वाः खयः (७, ४, ६१) इति तकारः शिष्यते। अशेमहि—अश्नुयाम (खा० आ०), "लिङ्याशिष्यङ् (३, १, ८६), यदितु तत्र परिगणनमन्य-व्यावृत्त्यर्थं तदानीं लिङि व्यत्ययेन शप् (३, १, ८५)। देवहितं "तृतीया कर्मणि (६, २, ४८)"—इति पूर्वपद-प्रकृतिस्वरत्वम्]॥ २॥

अथ नवमे सूक्ते तृतीया।

३ २ ३१२ ३१२ ३ १२३२ ३१२
स्वस्तिनइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः।
३ २ ३१ ३ १२ ३ २ ३ २३१ २
स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु।
३ २ ३२३ १ २
स्वस्तिनोबृहस्पतिर्दधातु॥ ३ *॥ ९

[अप्रतिरथऋषिः राहुगणो गोतमो वा, स्वराट् त्रिष्टुप् छन्दः, विश्वेदेवा देवताः।] "वृद्धश्रवाः" ['वृद्ध' प्रभूतं 'श्रवः' श्रवणं स्तोत्रं हविर्लक्षणमन्नं वा यस्य तादृशः] "इन्द्रः" "नः" अस्माकं [स्वस्तीत्यविनाश-नाम] "स्वस्ति" अविनाशं "दधातु" विदधातु। "विश्ववेदाः" [विश्वानि वेत्तीति विश्ववेदाः यद्वा, विश्वानि सर्ववेदांसि ज्ञानानि धनानि वा यस्य, तादृशः] "पूषा" पोषको देवः "नः" अस्माकं "स्वस्ति" विदधातु। "अरिष्टनेमिः"

* ऋ० वे० १, ६, १६, १ = य० वे० २५, १९।

[नेमिरित्यायुधनाम (निघ० २,२०,२), अरिष्टो अहिंसितो नेमिर्यस्य ; यद्वा, रथ-चक्रस्य धारा नेमिः, यत् सम्बन्धिनी रथ-नेमि र्न हिंस्यते सोऽरिष्टनेमिः एवम्भूतः] "तार्क्ष्यः" तृक्षस्य पुत्रः गरुत्मान्* "नः" अस्माकं "स्वस्ति" अविनाशं विदधातु। तथा "बृहस्पतिः" बृहतां देवानां पतिः पालयिता, "नः" अस्माकं "स्वस्ति" "अविनाशं" विदधातु† [वृद्धश्रवाः—बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् (८, २, १)। विश्ववेदाः—विद ज्ञाने (अदा० प०), विद्लृ लाभे (तु० उ०), आभ्यामसुन्-प्रत्ययान्तो वेदस्-शब्दः, "बहुव्रीहौ विश्वं सञ्ज्ञायाम् (६, २, १०६)"—इति पूर्वपदान्तोदात्तत्वम्। तार्क्ष्यः—तृक्षस्यापत्यं "गर्गादिभ्यो यञ् (४, १, १०५), ञित्त्वादाद्युदात्तत्वम् (६, १, १९७)। अरिष्टनेमिः—न रिष्टा अरिष्टा, अव्यय-पूर्वपद-प्रकृतिस्वरत्वम् (८, २, २), अरिष्टा नेमिर्यस्य स तथोक्तः। बृहस्पतिः—"तद् बृहतोः कर-पत्योः (६,१,१५७ वा०)"—इति सुट्-तलोपौ "उभे वनस्पत्यादिषु (६, २, १४०)"—इति पूर्वोत्तर-पदयोर्युगपत् प्रकृतिस्वरत्वम् ॥ ३ ॥ ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्यैकविंशस्याध्यायस्य

प्रथमः खण्डः ॥ १ ॥

---

* 'तार्क्ष्यः—वायुः, स हि रथादीनां तारयिता'—इति वि०।

† संहितायां स्वस्तिनइति द्विरुक्तिः समाप्ति-द्योतिका।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥२१॥

॥ इति नवमः प्रपाठकः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्ग-प्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे एकविंशोऽध्यायः समाप्तः ॥२१॥

---

॥ इत्युत्तरार्च्चिकः समाप्तः ॥

---

—:○:—

॥ ॐ नमः सामवेदाय ॥

# ॥ सामवेद संहिता ॥

तत्र

## ॥ उत्तरार्चिकसंहिता-परिशिष्टम् ॥

अथवा

## ॥ ऊह्यगानम् ॥

॥ हरिः ॐम् ॥

॥ दशरात्रपर्वेदानीम्प्रवर्त्तते ॥

२ऽ
वसिष्ठःककुबुत्तराबृहतीन्द्रः ॥ रथन्तरम् ॥(प्र) अभि
र र र १ २र र र र
त्वाशूरनोनुमोवा ।(उ) आदुग्धाइवधेनवईशानमस्यज
१ २ १ र २ १ ४
गतः । सुवा २ ३ईशाम् ।(प्र) आयिशानमा२ ३ यिन्द्रा
र र ५ ५ २र १
३ ।(उ) स्तस्थू२ ३ ४षा । औवाई । हाऊवा [१]॥(प्र) ईशो
२ र र र र १
वा ।(उ) नामिन्द्रस्तुस्थुषोनत्वावा्ँ अन्योदिवियः । नपा२
२ १ र २र १ ४ १ र र ५
३र्थिवाः । नजातोना२३जा३ । नायिष्या२३४ता । औवाई ।
५ २ १ २ र र र
हाऊवा[२]॥(प्र)नजोवा ।(उ)तोनजनिष्यतेअश्वायन्त्योमघवन्नि

१ २ १ २ १ ४ १ र
द्रवा२३जिनाः। गव्यन्नस्त्वा२३हा ३। वामा२ ३ ४हा।
१ ५ ५
ओवाइ। हाऊवा*[३] ॥ १ ॥

अस्य व्याख्यानम्—३भा० ८३ पृष्ठे द्रष्टव्यम्। १

२ऽ
वसिष्ठःककुबुत्तराबृहत्यग्निः ॥ रथन्तरम् ॥ आयि
र र १ र २ र र र र
नावोअग्निन्नमसोवा। ऊर्जोनपातमाहुवेप्रियञ्चेतिष्ठमर
१ २ १ २ १ ४ १
तिम्। सुवा२३ह्वाराम्। वायिश्वस्यदू२३ता३म्। आ
र र ५ ५ २ १
मा२३४र्ताम्। ओवा६। हाऊवा(१) ॥ विश्वोवा। स्या
र २ र र १ र १ २ १
दूतमम्रतᳪसयोजतेअरुषावि। श्वस्ता२३जसा। सादु
२ १ ४ १ र र र १
द्रवा२ ३ त्स ३। आहु२३४ता। ओवा६। हाऊवा (२)॥
२ १ २र र र १
सदोवा। द्रावत्सुवाहुतस्सुब्रह्मायज्ञस्सुशमी। वसू२३
२ १ २र१ ४ १ र र ५
नाम्। दायिवᳪराधो२३जा३। ना२३४नाम्। ओवा६।
५
हाऊवा(३) ॥ २ † ॥

अस्य व्याख्यानम्—३भा० २३९ पृष्ठे द्रष्टव्यम्। २

---

* ज्योतिष्टोमे पृष्ठमिदं साम।

† अतिरात्रे अश्विनीयम् 'एना'-'प्रत्यु'-'इमाः'—इति सामत्रयम्।

२र
वसिष्ठःककुबुत्तराबृहत्युषा॥ रथन्तरम्॥ प्रात्युव
र १ २र र र र र र
दर्श्यायतोवा। उच्छन्तोदुहितादिवोअपोमह्रीवृणुतेच।
१ २ १ २ १ ४ १ र र
क्षुषार२३तमाः। ज्योतिष्कृणो२३तो३। सूनार२३४रा। ओ
५ ५ २र १ र २ र र
वा६। हाउवा(१)॥ ज्योतोवा। कार्णोतिसूनरीउदुस्रि
र र र १ २ १ २ १ ४ १
यासृजतेसू। रिया२३स्सचा। उद्यन्नक्षा२३त्रा३म्। आ
र र ५ ५ २ १
र्चा२३४यिवात्। ओवा६। हाउवा(२)॥ उद्योवा। ना
२ र र र १ २ १ २र
क्षत्रमर्च्चिवत्तवेदुषोवियुषिसू। रिया२३स्यचा। साम्भक्ते
१ ४ १ र र ५ ५
ना२३गा३। मायिमा२३४हा। ओवा६। हाउवा(३)॥३॥

अस्य व्याख्यानम्—३भा० २४०पृष्ठे द्रष्टव्यम्। ३

२ऽ र
वसिष्ठःककुबुत्तरावश्विनौ॥ रथन्तरम्॥ आयिमा
र १ र २ र र र र
उवान्दिविष्टयोवा। उस्राहवन्ते अश्विनाअयंवामह्वे अव
र १ २ १ २ १ ४ १
से। शचा२३यिवसू। वायिशंविशा२३ᳩहो३। गाच्छा
र र ५ ५ २ १
२३४था। ओवा६। हाउवा(१)॥ विशोवा। वायिशᳩ

२ र र १ २ १ र
हिगच्छथोयुवञ्चितृन्ददथुब्भीं । जना२३न्नरा । चोदे

२र १ ४ १ र र र ५
था७सू२३ना३ । तावा२३४ता । औवा६ । हाऊवा(२) ॥

२र १ र २ र र १ र १
चोदोवा । था७सूनृतावतेअर्वाग्रथ७समनसा । निया२

२ १ २ १ ४ १ १
२३च्छताम् । पायिबत७सो२३मी३ । यास्मा२ ३ ४धा ।

र ५ ५ १
औवा६ । हाऊवा । (नि) अम् (३) ॥ ४ ॥

अस्य व्याख्यानम्—१भा० २४५ पृष्ठे द्रष्टव्यम् । ४

२र
भरद्वाजःककुब् त्तराबृहतीन्द्रः ॥ बृहत् ।(प्र०) औ

र र र २ र १र र १
होयित्वामिद्धिहवामहा३ए ।(उ) सातौबाजा । स्याका

३ ५ १ २ ३र ४र ५ २ १
रा२३४वाः । औवा३४ । औहोवा । वृत्रायिषुवायि ।

२ २ १ ५ १र र २ १र
द्रासा३१त् । पतिन्ना२३४राः ।(प्र०) त्वाङ्काष्ठा३४ । औ

४र ५ १ ५ ५
होवा ।(उ०)ह्व२आर्वा२३४ । ताः । उऊवा६हाऊ । वा(१)॥

२र र २ र १ २ ३ ५ १ २
औहोयिउवा३मे । काष्ठा । ह्वअर्वा२३४ताः । सत्वा३

३र ४र ५ २ १ १ २ २ ३
४ । औहोवा । नस्त्रायित्रवा । आचा३१ । स्तधृष्णू२

५ १ र २ ३र ४र ५ १
३४या । महस्तवा३४ । औहोवा । नो२आद्रा २ ३ ४

५ ५ २र र
यि । वाः । उहुवा६हाऊ । वा(२) ॥ औहोहोयिमहा

२ १ २ ३ ५ १र २ ३र
३ए । स्तवा । नोअद्रा२३४यिवाः । गामा३४ । औ

४र ५ २ १ २ २ २
होवा । प्लुवा(५)रथायि । यामा३१यि । द्रसङ्का२३४

५ २ १र र २ ३र ४र ५ १
यिरा । सत्रावाजा३४ । औहोवा । ना२जायि ।

१ ५ ५
ना२जिग्य २ ३ ४ । षायि । उहुवा ६ हाऊ । वा ।

(नि) चस् ॥ ५* ॥

अस्य व्याख्यानम्—३भा० ३३१-३३२ पृष्ठयोर्द्रष्टव्यम् । ५

२र र
प्रजापतिबृहतीन्द्रः ॥ अन्तरिक्षम् ॥ त्वावभिसो

र १ २र र १र १ १ १ २र
मा । सआय । वा । औहोहोवा२ । इहा । पवन्ते

१ २ १ २ १ २र र १र १ २
मदियम्मदियम्म । दाम् । औहोहोवा२ । इहा । स

१ र २ १ र२ र १ २र र १र १ २
मुद्रस्याधिविष्टपेमनीषि । णा । औहोहोवा२ । इहा ।

१ र २र र १र २ १ २ १ ३
मत्सरा । सा । औहोहोवा । इहा । मद । च्यूरता

* पृष्ठम् ।

५र र २र र १
२३४औहोवा(१)॥ हाऊमत्सरासः। मदच्यु। ता।
२र र १र १२ १र र २ १ २र
औहौहोवा२। इहा। मत्सरासोमदच्यु। ता। औ
र १र १२ १ २ १ २र र १
होहोवा२। इहा। तरत्समुद्रम्पवमानऊर्मि। णा।
२र र १र १२ १र र र २र र १र
औहौहोवा२। इहा। राजादे। वा। औहौहो
१२ १ ३ ५र र २र
वा२। इहा। ऋतम्। बृ२हा२३४औहोवा(२)॥ हा
र र र १ २र र १र १२
ऊराजादेवाः। ऋतम्बृ। हात्। औहौहोवा२। इहा।
१र र २र १ १ १ २र र १र १२ १
राजादेवऋतम्बृ। हात्। औहौहोवा२। इहा। अ
र २ १ २ १ २ १ २र र १र १२
र्षामित्रस्यवरुणस्यधर्म। णा। औहौहोवा२। इहा।
२ र २र र १र १२ १
प्रहिन्वा। ना। औहौहोवा२। इहा। ऋतम्।
३ ५र र २ १ र र २
बृ२हा २ ३ ४ औहोवा। सुष्टुभस्तुभोस्वाग्निश्रुमक्रा३न्।
१ १ १ १ १
इट्‌॰इडा २ ३ ४ ५(३)॥ ६ *॥

अस्य व्याख्यानम्—२भा० ४०१-४०२ पृष्ठयोर्द्रष्टव्यम्।६

---

* पृष्ठ्यस्य तृतीये मध्यन्दिने विनियोगः।

१ र
विरूपोबृहतीन्द्रः॥ पञ्चनिधनवैरूपम्॥ यद्या

२ र १ र २ १ र र २ १
वइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा। दिशं

र २ २ २ १र २र १ २ १ र
व्विशꣳहस्*। नत्वावज्रिन्सहस्रꣳसूर्य्याअनु। अश्वाशिशु

२ र १ र २१र २र १ र २१र २र
मती। नजातमष्टरोदसी। इट्(१)॥ नजातमष्टरोदसी।

१र २ र र १ १र
ए। नजातमष्ट। रोदसोवा। दिशव्विशꣳहस्। आप

२र १र र २ १ र १ र १ र २
प्राथमद्विनावृष्ण्यात्तृषन्। अश्वाशिशुमती। विश्वाशवि

१ २र र २ १ २र १र २ र
ष्ठशवसा। इट्(२)॥ विश्वाशविष्ठशवसा। ए। विश्वा

१ २ १र २
शविष्ठ। शवसोवा। दिशंव्विशꣳहस्। अस्माꣳअवम

१र २ १र र २ र १ २ १र २र
घवन्गोमतिव्रजे। अश्वाशिशुमती। वज्रिञ्चित्राभिरू

१ १ १ १
तिभिः। इट्। इडा२ ३ ४ ५(३)॥ ७ †॥

अस्य व्याख्यानम्—३भा० ४३१-४३२-४३३ पृष्ठेषु द्रष्टव्यम्। ७

---

* इमानि पदानि निधनानि।

† तत्रैव पृष्ठम्।

२र २र
प्रजापतिर्जगतीसोमः॥ अरिष्टम्॥ हाद्द। हो

२ र ४ ५ १ २ १ २ ३
इया। पावी। त्रन्तायि। विततः३म्ब। ह्मणस्पार२३

५ ४ ५ १र २ १ २ १ २
४तायि। प्राभूः। गात्रा। णी३परियायि। षिवा

३ ५ ४ ५ १ २ १ २ १र र २
यिश्वार२३४ताः। आता। प्तता। नू३र्नतदा। मोत्र

३ ५ ४ ५ १ २ १
स्नूर२३४तायि। शार्ता। सत्रायित्। वहन्तः। सम्।

१र ३ ३ ४ ५ १ २ १ २ १
तदाशार२३४ता(१)॥ तापोः। पवायि। त्रा३ंविततम्।

२ ३ ५ ४ ५ १र २ १ २ १
दिवस्पार२३४दायि। आर्चा। तोत्रा। स्या३तन्तवः।

२ ३ ५ ४ ५ १ २ १ २ १र
वियस्थार२३४यिरान्। आवा। तिया। स्या३पविता।

२र ३ ५ ४ ५ १ २ १र
रमाशार२३४वाः। दायिवाः। पृष्ठाम्। अधिरो। द्द।

२र ३ ५ ४ ५ १ २ १ २ १
तितेजार२३४सा(२)॥ आद्द। रुचात्। उषसः पृ। श्नि

२ ३ ५ ४ ५ १ २ १ २ १र २र
रग्रार२३४याः। उत्ता। मिमायि। नी३भुवने। षुवा

३ ५ ४ ५ १ २ १ २र १ २र ३
जार२३४यूः। माया। विनो। ममिरेत्र। स्यमायार

५　४ ५　१　२ १ २　१　२ र ३
३४या । नार्चा । त्तसाः । पितरः । ग । भमादा२
५　३
३४धूः । द्दो२३४५इ । डा(३) ॥ ८ * ॥

अस्य व्याख्यानम्—३भा० ४६०-४६१-४६२ पृष्ठेषु द्रष्टव्यम् । ८

२ र
अथर्व्वा गायत्री सोमः ॥ आथर्व्वणम् ॥ उऊवा
र र　र र र　र र र　१र
ओहा । औहौवा । पवस्वदा । उऊवाओहा । औहो
३र १　१ २　१र　२　र
वाहाऊ । वा । आवत् । त्तसाधार३नाइः । उऊवा
र र　र र र　र र　र　र
ओहा । औहोवा । देवेभ्यःपायि । उऊवा । औ
र　१र　३र २　१ २　१र　२
हा । औहोवाहाऊ । वा । सुवः । तायहा२३रा
र र र　र र र　र　र
३यि । उऊवाओहा । औहोवामरुझोवा । उऊवा
र र　१र　३र र　१　२　१र
ओहा । औहोवाहाऊ । वा । ज्योतिः । यवेमा२
२　२ र र र　१र　३र २
३दाइः । उऊवाओहा । औहोवाहाऊ । वा३(१) ॥
२ र र　र र र　र र　र र र
उऊवाओहा । औहोवा । सन्देवैश्शो । उऊवाओहा ।
१र　३र २　१ २　१र　२
औहोवाहाऊ । वा । आवत् । भतेवा २ ३ र्षा ३ ।

---

* आर्भवान्तं तदव ।

२ र र र र र र र र
उऊवाओहा। औहोवा। कविर्य्योनाऊ। उऊवा
र र १र ३र १ १ र १
ओहा। औहोवाहाऊ। वा। स्वः। अधिप्रा२३
२ र र र र र र र
याः३। उऊवाओहा। औहोवा। पवमानाः। उऊ
र र र १र ३र २ १ २ १र
वाओहा। औहोवाहाउ। वा। ज्योतिः। अदाभा२
२ २ र र र १र ५ ३र २
३याः३। उऊवाओहा। औहोवाहाऊ। वा३(२)॥
२ र र र र र र र र र र
उऊवाओहा। औहोवा। पवमाना। उऊवाओहा।
१र ३र १ २ १र २
औहोवाहाऊ। वा। आवत्। धियाहा२३यिता ३ः।
२ र र र र र र र र
उऊवाओहा। औहोवा। अभियोनायिम्। उऊवा
र र १र ३र १ १ १ १
ओहा। औहोवाहाऊ। वा। सूवः। कनिक्रा२३
२ र र र र र र र
दा३त्। उऊवाओहा। औहोवा। धर्म्मणावा। उऊ
र र र १र ३र २ १ २ १र
वाओहा। औहोवाहाऊ। वा। ज्योतिः। युमाह्व
२ २ र र र र ३र २ ३
२३हाः३। उऊवाओहा। औहोवाहाऊ। वा३। ई२
१ १ १
३४५(३)॥ ९ *॥

अस्य व्याख्यानम्—३भा० ५१३-५१४ पृष्ठयोर्द्रष्टव्यम्। ९

---

* चतुर्थे मध्यन्दिने विनियोगः।

२र र र
इन्द्रोविराडिन्द्रः ॥ महावैराजम् ॥ होइयाहोइ

र र २३ १र २ १ २र १
याहोइया३४३पिब । सोमाम् । इन्द्रमा । दतुत्वा । द

१र १ २र १र र २ १ २र
तुत्वा । दतुत्वा । पिबासोमाम् । इन्द्रमा । दतुत्वा ।

१ २र १ २र १र र २ १
दतुत्वा । दतुत्वा । पिबासोमाम् । इन्द्रमा । दतु

२र १ २र १ २र १र २ १ २ १र
त्वा । दतुत्वा । दतुत्वा । यन्तेसुषा । वाहरिया । स्वा

ऽ १र ऽ १र २ १र २ १ २
द्री२ः । स्वाद्रीरः । स्वाद्रिः । यन्तेसुषा । वाहरिया ।

१र ऽ १र ऽ १र २ १र २ १
स्वाद्रीरः । स्वाद्रीरः । स्वाद्रिः । यन्तेसुषा । वाह

२ १र ऽ १र ऽ १र २र १ र
रिया । स्वाद्री२ः । स्वाद्रीरः । स्वाद्रिः । सोतुर्बाहू ।

२ १ २ १र २ ऽ १र र ऽ १र र २र १
भ्याꣳसुयतो । नार्वा२ । नार्वा२ । नार्वा । सोतु

र २ १ २ १र र ऽ १र र ऽ १र र
र्बाहू । भ्याꣳसुयतो । नार्वा२ । नार्वा२ । नार्वा ।

२र १ र २ १ २ १र र ऽ १र र ऽ १र र
सोतुर्बाहू । भ्याꣳसुयतो । नार्वा२ । नार्वा२ । नार्वा ।

१ २ १ २ १ ऽ २
इयाहाउ । इयाहाउ । इयपिबमत्स्वा३ । हाउवा

२र र र र र २ ३र १ २ १
३(१)॥ होइयाहोइयाहोइया३४३यस्ते। मदो। युजि

१ १ २ १ २ १ २ १र २
यश्चा। रुरस्ति। रुरस्ति। रुरस्ति। यस्तेमदो। यु

१ २ १ २ १ २ १ २ १र
जियश्चा। रुरस्ति। रुरस्ति। रुरस्ति। यस्तमदो।

२ १ २ १ २ १ २ र १ २ १
युजियश्चा। रुरस्ति। रुरस्ति। येनवृत्रा। णीह

२ १ २ १ २ र १ २ १
रिया। स्वहꣳसि। स्वहꣳसि। येनवृत्रा। णीहरि

२ १ २ १ २ १ २ र १
या। स्वहꣳसि। स्वहꣳसि। स्वहꣳसि। येनवृत्रा।

२ १ २ १ २ १ २ १ २
णीहरिया। स्वहꣳसि। स्वहꣳसि। स्वहꣳसि।

१र २ १र २ १ २ १ २
सत्वामिन्द्रा। प्रभूवसाऊ। ममत्तु। ममत्तु।

१ २ २ १र २१र २ १ २ १ २
ममत्तु। सत्वामिन्द्रा। प्रभूवसाऊ। ममत्तु। ममत्तु।

१ २ १र २१र २ १ २ १ २
ममत्तु। सत्वामिन्द्रा। प्रभूवसाऊ। ममत्तु। ममत्तु।

१ २ १ २ १ २ १ र ५
ममत्तु। इयाहाऊ। इयाहाऊ। इययस्ते मत्स्वा३।

२ २र र र र र २र ३ १
हाऊवा३(२)॥ होइयाहोइयाहोइया३४३बोध। सुमायि।

२ १ २ १ र २र १ र २र १ र २र र
मघवन्वा । चमेमाम् । चमेमाम् । चमेमाम् । बो

१र २ १ २ १ र २र १ र २र १ र
धासुमायि । मघवन्वा । चमेमाम् । चमेमाम् । चमे

२र र १र २ १ २ १ र २र १ र
माम् । बोधासुमायि । मघवन्वा । चमेमाम् । चमे

२र १ र २र र १र २ १ २
माम् । चमेमाम् । यान्तेवसायि । छोअर्चतायि ।

१ २ १ २ १ २ र १र
प्रशस्तिम् । प्रशस्तिम् । प्रशस्तिम् । यान्तेवसायि ।

२ १ २ १ २ १ २ १ २ र
छोअर्चतायि । प्रशस्तिम् । प्रशस्तिम् । प्रशस्तिम् । या

१र १ २ २ १ २ १ २ १
न्तेवसायि । छोअर्चैतायि । प्रशस्तिम् । प्रशस्तिम् । प्रश

२ १र २ १ र २ १ २ १
स्तिम् । इमाब्रह्मा । सधमाद्यायि । जुषस्व । जुष

२ १ २ १र २ १ २ २ १ २
स्व । जुषस्व । इमाब्रह्मा । सधमाद्यायि । जुषस्व ।

१ २ १ २ १र २ १ र २ १ २
जुषस्व । जुषस्व । इमाब्रह्मा । सधमाद्यायि । जुषस्व ।

१ २ १ २ १ २ १ २ १ र
जुषस्व । जुषस्व । इयाद्याऊ । इयाद्याऊ । इयबोध

२ १ १ १ १
मत्वा३ । द्याऊवा३ । ई२३४५(३) ॥ १० * ॥

अस्य व्याख्यानम्—१भा० ५२७-५२८-५२९ पृष्ठेषु द्रष्टव्यम् । १०

---

* चतुर्थ्याऽत्र गानि दृष्टम् ।

१ २ २२ १ २
प्रजापतिर्गायत्रीन्द्रः॥ यण्वम्॥ अर्षासोमद्युमत्तमः।
१ २ २ २ २ १ २२ २ २ २ २ २
ए२। अभिद्रोणानि। रोरुवोवा। औहोवा औहोवा
२ २ २ २ १ २ २ १ २ २ १ २
औहोवा। औहोहायि। औहोहायि। औहोहायि।
२ २ २ १ २ ५ २
सीदञ्छ्योनौवना२३यिषुवाऊ। वा३। ई२३४डा(१)॥ अ
२ २ १ २ २ २ १ २ १२
स्माइन्द्रायवा२३यवा३यि। वरुणायमरु२३द्भियाः। सो
२ १ २ ३ ५ २
मा अर्षन्तुवा२३यिष्णवाऊ। वा३। ई२३४डा(२)॥ इष
२ २ १ २ २ २ १ २
न्तोकायनो२३दधा३त्। अस्मभ्यꣳसोमवा२३यिश्वता३ः।
२२ २ २ २ २ २ २ २ २ २ २ १ २ २ १ २
औहोवाऔहोवाऔहोवा। औहोहायि। औहोहा
२ १ २ २ १ २
यि। औहोहायि। आपवस्वसहा२३स्रिणाऊ। वा३।
१ १ १ १ १
इट्०इडा२३४५(३)॥ ११ * ॥

अस्य व्याख्यानम्—३भा० ६१४-६१५-६१६ पृष्ठेषु द्रष्टव्यम्। ११

२ २
बृहद्गिरिःपथ्यापङ्क्तिरिन्द्रः॥ बार्हद्गिरम्॥ इन्द्रो
१ २ २ २ १
मदा। यवावृधेशवसेवृत्रहा२नुभायि। अथा। तमिन्म

* पञ्चमेऽहनि मध्यन्दिने।

२ २ २ २१ २ १ ४ ५
त्वन्त्तुवा१जा३यि । षू । ऊतिमर्भेद्दवा३ । माद्दायि ।
१ २ २ १ २ २
संवाजेषुप्रना२३द्दोयि । वायिषदा३१ऊवा२३(१) ॥ असि
१ २ २ २ १
द्दिवी । रसेन्द्रोसिभूरिपरा२ददायि । अथा । असिद्
२ २ २ १ २ २ २ ४ ५
भ्रस्यचा१यिदा३र्धाः । यजमानायश्रा३यि । त्तासायि ।
१ २ २ १ २ २
सुन्वतेभूरितार३यिद्दोयि । वासुआ३१ऊवा२३(२)॥ यदु
२ १ २ २ २ २ १
दीरा । तआजयोधृष्णवेधीयता२यिधनाम् । अथा ।
२ २ २ १ २ ४ ५
युङ्क्ष्वामदच्युता१द्दा३री । कऽंहनःकव्वसा३ऊ । दाधाः ।
१ २ १ २
अस्माऽंइन्द्रवसा २ ३ ऊहोयि । दाधआ ३ १ ऊवा २ ३ ।
५
आ २ ३ ४ या(३) ॥ १२ * ॥

अस्य व्याख्यानम्—३भा० ६३२—६३५ पृष्ठेषु द्रष्टव्यम् । १२

१
पृथुरश्मिःपथ्यापङ्क्तिरिन्द्रः ॥ पार्थुरश्मम् । एई
२ ३ ५ २ १२ १
न्द्रा । ओ२ ३ ४ वा । मदायवा२त्तृधायि । अथा ।
२ ३ ५ २२ १ १
एआवा । ओ२३ ४ वा । सेवृत्रहा२नृभायि । अथा ।

---

* ब्राह्मणस्य वार्हद्गिरं ब्रह्म साम ।

एताभी। ओ२ ३ ४ वा। मह्वन्तुवा२जिषू। अथा।

एऊता। ओ२३ ४ वा। अवँह्वा२मह्वायि। अथा।

एसावा। ओ२३ ४ वा। जेषुप्रनो२विषात्। अथा(१)॥

एआसा। ओ२३ ४ वा। ह्वीरसे२नियाः। अथा।

एआसा। ओ२३ ४ वा। भरिपरा२ददायि। अथा।

एआसा। ओ २ ३ ४ वा। दभ्रस्यचा२यिद्दृधाः।

अथा। एयाजा। ओ२३४वा। मानायशा२यिक्षसायि।

अथा। एह्वन्वा। ओ२३४वा। तेभूरिता२यिवसाऊ।

अथा(२)॥ एयादृ। ओ२३४वा। ईरतआ२जयाः।

अथा। एधृष्णा। ओ२३४वा। वेधीयता२यिधनाम्।

अथा। एयूक्ष्वाः। ओ २३४वा। मदच्युता२ह्वरायि।

अथा। एकाण्ह्वा। ओ२३४वा। नःकव्वसा२ऊदधाः।

२  १  ५  २१  १
अथा। एअस्माऽ। ओ२३४वा। इन्द्रवसा२ऊदधाः।
१ १ १ १
अथार३४५(३)॥ १३ * ॥

अस्यापि व्याख्यानम्—३भा० ६३२—६३५ पृष्ठेषु तदेव। १३

रायोवाजःपथ्यापङ्क्तिरिन्द्रः॥  रायोवाजीयम्॥

१  २  १र  र  र  र  १
एस्वादोः। इत्थाविषूवतोमधोःपिबन्तिगौ२रियाः। इडा।
र  र  १  २  २  १र  २  ४  ५
याइन्द्रेणसया१वा३रीः। वृष्णामदन्तिशो३। भाथा(१)॥
१  २  १  र  र  र  १
एताआ। स्यपृशनायुवस्सोमऽश्रीणन्तिपा२श्नयाः। इडा।
र  २  २  २  १  २
प्रियाइन्द्रस्यधा १ यिना ३ वाः।  वज्रऽहिन्वन्तिसा ३।
४  ५  १  २  १  र
याकाम्(२)॥ एताआ। स्यनमसासहस्सपर्य्यन्तिप्रचा
१  र  २  २  २  १र
२यितसाः। इडा। व्रतान्यस्यसा१श्चा३यिरायि। पुरूणि
र  २  ४  ५  र  १  २
पूर्वचा३यि। तायायि। वस्वीरनुस्वरा२३ज्योयि। जायमा
१  १ १ १
३१ऊवा२३। इट्‌ऽइडा२३४५(३)॥ १४ † ॥

अस्य व्याख्यानम्—३भा० ६३७-६३८-६३९ पृष्ठेषु द्रष्टव्यम्। १४

२
रुद्रोऽनुष्टुप् सोमः॥  शक्करर्षभः।  ओ३१म्।

---

* राजन्यस्येदं ब्रह्म साम।  [ सामनी।

† उभयोरिदमच्छावाकसाम। वैश्यस्य रायोवाजीयबार्हद्गिरे ब्रह्मसामाच्छावाक-

र र र र र र र र १ २ १र २ १र र र
पवाएस्ववाएजसाएतयञ्ञा । शय्यो: । शय्यो: । पाए
र र र र २ २ १ र र र र र र २ १
वाएञाएधा१ । हविः । राएयाएह्वएतञ्ञा । सुवः । सु
र र र र र र २ १ र र
वः । इन्द्राएयसोएमवाएष्णवञ्ञा । ज्योतिः । ज्योतिः ।
र र र र र र र र २ १ र र र र
देवाएभ्योमाएधुमाएत्तरञ्ञा । इट्(१) ॥ ओवामेरिह्वाएन्ति
र र २ १ २ १र २ १र र र र र र र १ १
धाएतयञ्ञा । शय्यो: । शय्यो: । ह्वाएराएम्याएविया ।
२ १ २ १ र र र र र र र २ १ १
हविः । हविः । ञाएआएद्रूएहञ्ञा । सुवः । सुवः ।
र र र र र र र २ १ र र र
वत्सामेजातामेनमाएतरञ्ञा । ज्योतिः । ज्योतिः । पवा
र र र र र र र १ र र र र र र
एमानाएविधाएर्मणिया । इट्(२) ॥ ओवामिद्याम्ह्वाएमह्वा
२ र१ २ १र २ १र र र र र र र २ २ १
एव्रतञ्ञा । शय्यो: । शय्यो: । पाएर्थाएवाएच्चा१ । हविः ।
२ १ र र र र र र २ १ र
हविः । आएताएजाएभ्रिषञ्ञा । सुवः । सुवः । प्रता
र र र र र र २र १ र र र र
प्द्रापीमेश्वमूएच्वथाञ्ञा । ज्योतिः । ज्योतिः । पवाए
र र र र २ २ १ १ १
नाएमह्वाएत्वना२ । इट्०इडा२३४५(३) ॥ १५ * ॥

अस्य व्याख्यानम्—३भा० ६५८-६५९-६६० पृष्ठेषु द्रष्टव्यम् । १५

---

* पञ्चमार्भवे ।

१र र
प्रजापतिरनुष्टुप्सोमः ॥ चष्टेडपदस्तोभः ॥ इडा ।
२ १र २र र १र र र र २ १ २र १र २र १
पवस्ववाजसातये । इडा । इडा । पवित्रेधारयासुतः ।
र र र र र र र १ १र १र र र र
इडा । इडा । इन्द्रायसोमविष्णवे । इडा । इडा ।
२र१र२र १ २ ३ १ १ १ १ १र र र र र २
देवेभ्योमधुमत्तरा२३४५ः । इडा(१) ॥ इडा । त्वांरिहन्ति
र १ र र र र २ १ र २ १ र र
धीतयः । इडा । इडा । हरिम्पवित्रेअद्रुहः । इडा ।
र र २ १ २र १ २र १ १र र र र २र
इडा । वत्सञ्जातन्नमातरः । इडा । इडा । पवमान
१ २ ३ १ १ १ १ र र र र र र
विधर्म्मणो२३४५ । इडा(२) ॥ इडा । त्वन्दयाञ्चमहिव्रत ।
१र र र र २ १र र २ र १र र र र
इडा । इडा । पृथिवीञ्चातिजभ्रिषे । इडा । इडा ।
२र १ २ र १र र र र १ २र १ २
प्रतिद्रापिममुञ्चथाः । इडा । इडा । पवमानमहित्व
३ १ १ १ १ १ २र ३ १ र र
ना२३४५ । पवमानमहित्वना१ । इडा(३) ॥ १६ * ॥

अस्यापि व्याख्यानम्—३भा० ६५८-६५९-६६० पृष्ठेषु तदेव । १६

१ २
प्रजापतिर्गायत्रीन्द्रः ॥ रेवत्यम् ॥ हावीन्द्रा ।
र १ २ १ ५ २
येन्दाऊ । इहा । मरुत्वता२यि । हा३१ऊवा२३ । इ

* पञ्चमार्षेवे । इडापदानि च निधनानि ।

५ २ १ २ १ ऽ २
३४डा। पवा२स्वमा। इहा। धुमत्तमा२ः। हा३१

२ ५ २ १ २ १र
ऊवा२३। ई३४डा। अर्का२स्वयो। इहा। निमास

ऽ २ ५ १ २
दा२म्। हा३१ऊवा२३। ई३४डा(१)॥ हाऊतान्वा।

१ २ १र २
विप्राः। इहा। वचोविदा२ः। हा३१ऊवा२३। ई३

५ २ १ २ १ ऽ
४डा। परा२यिष्कृण्वा। इहा। तिधर्णसा२यिम्।

२ २ ५ २ १ २
हा३१ऊवा२३। ई३४डा। सन्त्वा२मृजा। इहा। ति

१र ऽ २ ५ १ र २
आयवा२ः। हा३१ऊवा२३। ई३४डा(२)॥ हाऊरासाम्।

र १ २र १ ऽ २
तेमायि। इहा। चोअर्य्यमा२। हा३१ऊवा२३। ई३

५ २ १ २ १ ऽ
४डा। पिवा२न्तुवा। इहा। रुणःकवा२यि। हा३१

२ ५ २ र १ २ १
ऊवा२३। ई३४डा। पवा२माना। इहा। स्वमरु

ऽ २ ५
ता२ः। हा३१ऊवा२३। ई३४डा(३)॥ १७ *॥

अस्य व्याख्यानम्—४भा० ३०-३१ पृष्ठयोर्द्रष्टव्यम्। १७

२र १ र
रुद्रोगायत्रीन्द्रः॥ रैवतर्षभः॥ सुरूपकृत्नु मूत

* षष्ठे माध्यन्दिने।

र २र १ र र १र १ र र २१र २
ये। सुरूपकृत्नु मूतये। सुरूपकृत्नु मूतये। सुदुघामि

र १र ३२ र १ २
वगोदुहे। जुहूमसायि। द्याविद्यवायि। द्याविद्यवा

२र १ २ १ २ १ २ १र २ १
यि। द्याविद्यवा३१उ। वा२३(१)॥ उपनस्सवनागहि। उप

२ १ २२र२ १ २ १ २ १र२ १र २ र र
नस्सवनागहि। उपनस्सवनागहि। सोमस्यसोमपाःपिब।

१र ३ २ र १र २र १र २र १र २
गोदाइद्र। वातोमदाः। वातोमदाः। वातोमदा३१उ।

१ र २र १ २र र १ र २र १ २र र
वा२३(२)॥ अथातेअन्तमानाम्। अथातेअन्तमानाम्।

१ र २र १ २र र १र २ र १र र १
अथातेअन्तमानाम्। विद्यामसुमतीनाम्। मानोअ

२ र १र २र १र २र १र
तायि। ख्याआगहायि। ख्याआगहायि। ख्याआ

२ १ १ १
गहा३१उ। वा२३। उम्। उम्। उम् (३)॥ १८ *॥

अस्य व्याख्यानम्—४भा० ५७-५८-५९ पृष्ठेषु द्रष्टव्यम्। १८

१ २
प्रजापतिः षट्पदापि जगतीन्द्रः॥ श्येनम्॥ ऊभा

१ १ २ र १
यि। यदिन्द्रो२दसायि। इडा। आपा। प्राथउषा

१ १ २ १र १
२यिवा। इडा। मादा। तन्वामदा२यिना।

* षष्ठं ब्रह्मसाम।

२ १ १ १
इडा। साम्ना। ऊर्ध्वपर्णा२यिनाम्। इडा (१)॥ दी
१ १ १ १ १ १
र्घाम्। हियङ्कुशा२यथा। इडा। शाक्तीम्। बिभ
१ २ १ १
र्षिमा२न्तुमाः। इडा। पूर्वी। णमघवा२न्पदा। इ
२ १२ १ २
डा। वायाम्। अजोयथा२यमाः। इडा (२)॥ आवा।
१ १ २ १
स्मदुद्धृणा२यताः। इडा। मार्ता। स्यतनुचा२यिस्थि
१ २ १ १
राम्। इडा। आधाः। पदन्तमा२यिक्षधायि। इडा।
२ २ १ १ २
योश्रा। स्मऽअभिदा२सतायि। इडा। देवी। ज
१ २ २ १
निवजा२यिजनात्। इडा। भाद्रा। जनिवजा२
१ १११
यिजनात्। इडा२३४५ (३) ॥ १९ * ॥

अस्य व्याख्यानम्—४भा० ६०-६१-६२ पृष्ठेषु द्रष्टव्यम्। १९

प्रजापतिः द्विपदा विष्टारपङ्क्तिः विराडेकेषामिति भुवने-
१२ २ २ १२ १२
न्द्रो विश्वेदेवाः॥ भद्रम्॥ होइहा। इमानुकम्भवना
२ २ १ २ १ २ २ १
सीषधेमा३। इहा। इन्द्रश्चविश्वे चदेवा३ः। इहा(१)॥

* षष्ठं आख्यावाकसाम।

१ १ २ १ २ १ र २ १ २र १र २
यज्ञश्चनस्तन्वश्च प्रजाश्चा२। इहा। आदित्यैरिन्द्रस्स
१ र २ र १ २र १र २ १ २र १ २
हसौषधानू३। इहा(२)॥ आदित्यैरिन्द्रस्सगणोमरुद्भी
१ २ १ २र १र २ १ १
३:। इहा। अस्मभ्यम्भेषजाकरा ३ त्। इहा। ए ३।
१
भद्रम्(३) ॥ २० * ॥

अस्य व्याख्यानम्—४भा० ९८-९९ पृष्ठयोर्द्रष्टव्यम्। २०

॥ इत्यूह्यगाने दशरात्रपर्व्वणि प्रथमस्यार्द्धः प्रपाठकः ॥

———000———

२ र २
अग्निर्गायचोरर्कः॥ अग्नेरर्कः॥ यस्तेमदोवा३
१ २ र र १ २ र र
रायिणा१या२:। तेनापवस्वा३आन्धा१सा२। देवावीर
१ २ १ २
घा३शा४सा१हा२(१)॥ जघ्निर्वृत्रमा३मायित्रा१या२म्। स
र र २ र र १
स्निर्व्वाजन्दि३वायिदा१यिवा२यि। गोषातिरश्वा३सा
२ र १ २ र र
आ१सा२यि(२)॥ सम्मिश्लोअरु३षोभू१वा२:। सूपस्थाभि
१ र र र १
र्न्नो३धायिनू१भा२यि:। सीदन्श्येनोना३योना१यिमा२।
र १ २र १र २ १
ए। अग्निर्मूर्धाभवद्दिव: (३)॥ १ † ॥

अस्य व्याख्यानम्—२भा० ३४३-३४४-३४५ पृष्ठेषु द्रष्टव्यम्। १

---

* षष्ठे द्वितीयउक्थे। † सप्तमार्भवे।

स्वाशिरकऋषयो गायत्री सोमः॥ स्वाशिरामर्क्कम्॥

अयामायाम्। पवस्वदारयि। वऋायूर२३४षाक्। इन्द्र
ङ्क्षा२। ओतायिमा२३४दाः। वायुमारो२। द्धधर्म्मा
२३४णा(१)॥ पवमाना२। नितोशा२३४सायि। रयिं
सोमा२। अवाऋा२३४याम्। इन्दोसमू२। द्रमावार
३४यिशा (२)॥अपघ्नन्पा२। वसोयिमा२३४र्धाः। क्रतुवि
त्ता२। ममत्सा२३४राः। नुदस्वादा२रयि। वयुञ्जार३
४नाम्। ई२३४५ (३)॥ २ *॥

अस्य व्याख्यानम्—४भा० २२७-२२८ पृष्ठयोर्द्रष्टव्यम्। २

वरुणो बृहती सोमः॥ देवस्थानम्॥ हाउपरीतो
षायि। चतासुता३म्। होयि। होयि। होयि।
हाउहाउहाउवा। सद्दोनरः। सोमोयउत्तमंदवा३
यिः। होयि। होयि। होयि। हाउहाउहाउवा।

---

*अष्टमार्भवे।

सत्यमोजः। दधन्वाꣳयोनर्य्योआ३। द्दोयि। द्दोयि। द्दो
यि। द्दाऊद्दाऊद्दाऊवा। स्वर्ज्योतिः। सुवन्तरा३यि।
द्दोयि। द्दोयि। द्दोयि। द्दाऊद्दाऊद्दाऊवा। एस्था
दिदम्। एस्थादिदम्। एस्थादिदम्। सुषावसोम
मद्रिभा३यिः। होयि। द्दोयि। द्दोयि। द्दाऊहाऊ
द्दाऊवा। द्यौः(१)॥ द्दाऊसुषावसो। ममद्रिभा३यिः।
होयि। द्दोयि। द्दोयि। द्दाऊहाऊहाऊवा। सद्दो
नरः। सुषावसोममद्रिभा३यि। द्दोयि। द्दोयि। हो
यि। द्दाऊहाऊद्दाऊवा। सत्यमोजः। नूनम्पुनानो
अविभा३यिः। द्दोयि। होयि। द्दोयि। द्दाऊहाऊ
हाऊवा। स्वर्ज्योतिः। परिस्रवा३। द्दोयि। द्दोयि।
होयि। द्दाऊद्दाऊहाऊवा। एस्थादिदम्। एस्थादि
दम्। एस्थादिदम्। अदब्धस्सुरभिन्तरा३ः। द्दोयि।

२ १र २र
होयि। होयि। हाऊहाऊहाऊवा। द्यौः (२)॥ हावद
१ २ १ २
अस्तृ। रभिन्तरा३ः। होयि। होयि। होयि। हा
१र २ १ २
ऊहाऊहाऊवा। सहोनरः। अदब्धस्तुरभिन्तरा३ः।
१ २ १
होयि। होयि। होयि। हाऊहाऊहाऊवा। सत्य
र १ १र २र १ २ १
मोजः। सुतेचित्त्वाप्सुमदा३। होयि। होयि। हो
२ १ र १र १ २
यि। हाऊहाऊहाऊवा। स्वर्ज्योतिः। मोअन्धसा३।
१ २ र १र
होयि। होयि। होयि। हाऊहाऊहाऊवा। एस्था
२र १र २र १र २र १ २र १र २
दिदम्। एस्थादिदम्। एस्थादिदम्। श्रीणन्तोगोभि
१ २ १ २
रुत्तरा३म्। होयि। होयि। होयि। हाऊहाऊ
१र २र १र २ १ १र
हाऊवा। द्यौरक्रान् भूमिरततनत्समुद्रꣳ समचूकुपत्।
१ १ १ १ १
इट्०इडा२३४५ (३)॥ ३*॥

अस्यापि व्याख्यानम्—४भा० ३०५-३०६-३०७ पृष्ठेषु द्रष्टव्यम्। ३

---

* नवमे मध्यन्दिने।

१　१
प्रजापतिर्बृहती सोमः ॥ सङ्कृतिनि ॥ एपारी ।
र १　　१　　१　　२र ३र र　१र
तोषिञ्चतार२३हो२३यि । सुतार२३म् । हाओवा । सो
२र १ २ १ २ १　२ १र र र २　१ २ १र
मोयउत्तमꣳहविः । दधन्वाꣳयोनर्य्योअ । प्सुवन्तरा ।
२ १र २ १र १ १　२　१ २ १र　१　१
सुषावसोममद्रिभिः (१) ॥ एसुषावसोममा२३हो२३ । द्रि
२र ३र र　२ १र २ २ १　२　र १
भा२३यिः । हाउवा । सुषावसोममद्रिभिः । नूनम्पु
२र १र　२　१ २　१ २　१ २ १ २
नानोविभिः । परिस्रव । अदब्धस्सुरभिन्तर । एआदा ।
१　　१　　१　२र १र र　१ २
ब्धस्सुरभा२३यिहो२३ । तरा२३ः । हाओवा । अदब्ध
१ २　१र २र १　२र　र २ २　र २
स्सुरभिन्तरः । सुतेचित्त्वाप्सुमदा । मोअन्धसा । श्रीणा
२र १र २ १ २　२　२　१ १
न्तोगोभिरुत्तरम् । हो३ । आ३ । ऊ३ । ई२३
१ १
४५ (३)॥ ४ * ॥

अस्यापि व्याख्यानम्—४भा० ३०५—३०७ पृष्ठेषु तद्वेव । ४

२　र
प्रजापतिः बृहती सोमः ॥ भर्गम् ॥ यत् । परी
र　१　३　५　२र र　१
तोषि । चतार२ह२३४ताम् । सोमोयउ । तमार२ꣳ

* अस्यापि नवमे मध्यन्दिने ।

३ ५ २ र र र १ ३ ५
ह्वा२३४वी: । दधन्वाᳪयोनर्य्यो३ । पु वार२न्ता२३४रा ।
२ र र १ ३ ५ २ र र १
सुषावसो । ममा२द्रा२३४यिभायि: ॥ सुषावसो । ममा
३ ५ २ र र १ ३ ५
२द्रा२३४यिभायि:(१) ॥ सुषावसो । ममा२द्रा२३४यिभा
२र र र १ ३ ५
यि: । नूनम्पु नानो३विभि: । परा २ यिस्वा २ ३ ४ वा ।
२ १ ३ ४ २ १
अदब्धस्सुरभा२यिन्ता२ ३ ४रा:(२)॥ अदब्धस्सुरभा२यि
३ ५ २ १ ३ ५ २ र
न्ता२३४रा: । अदब्धस्सु । रभा२यिन्ता२३४रा: । सुतेचि
र र १र ३ ५ १र र र
त्वाप्सुमदा । मो३आ२न्धा २ ३ ४ सा । श्रीणन्तोगो ।
१ ३ ५ २ १ १११
भिरू२त्ता२३४राम् । ए३ । भर्गा२३४५: (३)॥ ५ * ॥

अस्यापि व्याख्यानम्—४भा० ३०५—३०७ पृष्ठेषु द्रष्टव्यम् । ५

१ २र १र २ र
प्रजापतिर्बृहती सोमः ॥ यज्ञ: ॥ परीतोषिञ्चता
१ र १र १ २ १ १ १ २ १र र र २ १
सुतम् । सोमोयउत्तमᳪहवि: । दधन्वाᳪयोनर्य्यो३अप्स्
२ १ र १ १र २ १र २ १ २ २ १र २ १र २ १ २
वन्तरा । सुषावसोममद्रिभि:(१) ॥ सुषावसोममद्रिभि: ।
१र २ १र २ १ २ र १ २र १र २ १ २ १
सुषावसोममद्रिभि: । नूनम्पुनानोविभि:परिस्रव । अ

* एतस्यापि नवमे मध्यन्दिने ।

२ १ २ १ २ १ २ १ २
दभ्यस्सुरभिन्तरः(२)॥ अदभ्यसुरभिन्तरः । अदभ्यस्सुर

१ २ १र २र १ २र र १ २र २र १ २र १र १
भिन्तरः । सुतेचित्त्वाप्सुमदामोअन्धसा । श्रीणन्तोगोभि

१ २ १ र २र १ २र १ ३ १ १ १ १
रुत्तरम् । अतञ्ञोवेमअरदोवयन्ते२३४५(३) ॥ ६* ॥

अस्य व्याख्यानम्—४भा० ३०५-३०६-३०७ पृष्ठेषु तदेव । ६

१
दीर्घतमा बृहती सोमः ॥ दीर्घतमसोर्कम् ॥ वृ

२ १ र २ १ २ १ २ १ २
षा । वासोमम । द्रिभायिद्रिभायिः । द्रिभायिः ।

१ २ १ र १ १ २ १ २ १ २
वृषा । वासोमम । द्रिभायिद्रिभायिः । द्रिभायिः ।

१ २ १ र २र १ २ १ २ १ २
नूनाम् । पूनानोअविभिःपरि । स्रवास्रवा । स्रवा ।

१ २ १ २ १ २ १ २ १ २
आदा । व्यास्सुरभि । तरास्तराः । तराः(२) ॥ ७† ॥

अस्य व्याख्यानम्—४भा० ३०६ पृष्ठे तदेव । ७

१
दीर्घतमा जगती सोमः ॥ दीर्घतमसोर्कः ॥ आ

२ १ र २र र र १ २ १ २ १ २
सा । वायिसोमोअरुषोवृषा । हरायिर्हरायिः । हर

१ २ १ २र र १ २ १ २
यिः । राजे । वादस्मोअभिगाअचि । क्रदात्क्रदात्

* नवमे मध्यन्दिने । सोमविभागयम् ।

† तत्रैव ।

१२ १२ १२१२ १२१२ १
क्रदात्। पूना। नोबारमत्येय्य। व्ययाव्ययाम्। व्य
२ १ २ १२२ २ १२१
याम्। श्यायिनो। नायोनिङ्क तवन्तमा। सदास
२ १२ १२ १ १२
द्दात्। सदात् (१)॥ पार्जा। न्याःपितामहिषस्यप। पि
२१२ १२ १२ १२
नाणिनाः। णिनाः। नाभा। पार्थिव्यागिरिषुत्तयम्।
१२ १२ १२ १२ १२१२
द्धायिद्धायि। द्धायि। स्वासा। राश्रापोश्रभि
२ २ १ १२ १२ १२ १
गाउदा। सरान्त्सरान्। सरान्। साङ्गाः। वाभि
२ २२२ १२ १२ १२ १२
व्वंसतवीतेश्र। ध्वरायिध्वरायि। ध्वरायि(२)॥ कावीः।
१२ २ २ १२ १२ १२ १
वायिधस्यापरियेषिमा। हिनाꣳहिनाम्। हिनाम्। आ
२ १ १२ २ १२ १२ १२
चरो। नाम्टष्टोअभिवाजम्। षसायिषसायि। षसा
१२ १ १२२ १२१२
यि। आपा। सायिधन्दुरितासोमनः। म्टडाम्टडा।
१२ १२ १२२ २ १२१
म्टडा। धार्ता। वासानःपरियासिनिः। निजान्नि
२ १२ २११११
जाम्। निजाम्। इ२३४५(३)॥ ८*॥
अस्य व्याख्यानम्—४भा० ३१७-३१८-३१९ पृष्ठेषु द्रष्टव्यम्। ८

---

* तत्रैव।

वसिष्ठो गायत्रीन्द्रः ॥ ककतीषु रथन्तरम् ॥ का

यानश्चित्रआभुवोया । ऊतीसदा । वृधा२३सखा । का

याश्चा२३यिष्ठा३ । यावा२३४र्ता । औवा६ । हाऊ

वा(१) ॥ ताकोवा । त्वासत्योमदानाम्मꣳहिष्ठोम । त्सदा

२३न्धसः । दार्ढाचिदा२३रूजु३ । जायिवा २ ३ ४ सा ।

औवा६ । हाऊवा(२) ॥ त्वोवा । भीषुणस्सखीनामविता

ज । रितृ२ꣳणाम् । शातम्भवा२३सी३ । ऊता२३४या ।

औवा६ । हाऊवा(३) ॥ ८ * ॥

अस्य व्याख्यानम्—३भा० ८८-८९ पृष्ठयोर्द्रष्टव्यम् । ८

॥ इति ऊह्यगाने दशरात्रपर्व्व समाप्तम् ॥ १ ॥

---

* दशमे पूष्ठम् ।

## ॥ अथ संवत्सर-पर्व्व ॥

———000———

२ऽ र र
वसिष्ठो बृहती सोमः ॥ रथन्तरम् ॥ पूनानस्सोम
र १ १ र २ र र र र र र १
धारयोवा। आपोवसानोअर्षस्यारत्नधायोनिम्हत। स्य
२ १ र २र १ ४ १ र
सा२३यिदसायि। ऊत्सोदेवोर२३हा३यि। राण्या२३४या।
र ५ ५ २ १ र २ र
ओवा६। हाऊवा(१)॥ उत्सोवा। दायिर्वोहिरण्ययोद
र १ २ १ २ १
हानऊधर्हिंवियम्। मधू२३प्रियाम्। प्रात्न७सधार३
४ १ र र ५ ५
स्था३म्। आसा२३४दात्। ओवा६। हाऊवा(२)॥
२ १ २ र र र १
प्रत्नोवा। साधस्थमासददापृक्रयन्धरुणंवा। जिया२३
२ २र १ ४ १ र र
र्षसायि। नृभिर्द्धौतोर२३वा३यि। चाक्षा२३४णा। ओ
५ ५ १
वा६। हाऊवा। अस्(३)॥ १० * ॥

अस्य व्याख्यानम्—३भा० ४१-४२-४३ पृष्ठेषु द्रष्टव्यम्। १०

विरूपः प्रजापतिर्बृहती सोमः ॥ अजोवैरूपम् ॥

---

* प्रायणीयेऽह्नि मध्यन्दिने।

२ र ५ १ र
अभिसोमा। सआ३१उवा२३। या२३४वाः। पवन्तेम।
२ ५ २ १ र र
दिया३१उवा२३। मा२३४दाम्। समुद्रस्याधिविष्टपे।
२ ५ २ १र २
मना३१उवा२३यि। पी२३४णाः। मत्सरासः। मदा३
५ १ र
१उवा२३। च्यू२३४ताः(१)॥ मत्सरासाः। मदा३१उवा
५ २ १र २
२३। च्यू२३४ताः। मत्सरासः। मदा३१उवा२३।
५ १ २ १ र २ १
च्यू२३४ताः। तरत्समुद्रम्पवमा। नऊ३। आऊवा२३।
५ १र र र २
मी२३४णा। राजादेवः। ऋता३१उवा२३। बृ२ ३ ४
५ १र र र ५
हात्(२)॥ राजादेवाः। ऋता३१उवा२३। बृ२३४हात्।
१र र र २ ५ १ र २
राजादेवः। ऋता३१उवा२३। बृ२३४हात्। अर्षामि
१ १ २ ५ १ र
त्रस्यवरुण। स्वधा३१उवा२३। मा२३४णा। प्रहिन्वा
२ ५ २र
नः। ऋता३१उवा२३। बृ२३४हात्। दादा३१उवा२
१ १ १ १ १
३। इट्-इडा२३४५(३)॥ ११ *॥

अस्य व्याख्यानम्—३भा० ४०१-४०२ पृष्ठयोर्द्रष्टव्यम्। ११

---

* अभिप्लवस्य तृतीयेऽह्नि मध्यन्दिने।

अथर्व्वा बृहती सोमः॥ आथर्व्वणम्॥ उडुवा
ओहा। औहोवा। परीतोषायि। उडुवाओहा।
औहोवाहाऊ। वा। आवत्। चताम्२३ता३म्।
उडुवाओहा। औहोवा। सोमोयऊ। उडुवाओ
हा। औहोवाहाऊ। वा। हुवः। तमᳫहविर्द्धन्वाᳫ
योनर्य्योअप्सुवन्ता२३रा३। उडुवाओहा। औहोवा।
सुषावसो। उडुवाओहा। औहोवाहाऊ। वा।
ज्योतिः। ममद्रा२३यिभा३यिः। उडुवाओहा। औ
होवाहाऊ। वा३(१)॥ उडुवाओहा। औहोवा। सु
षावसो। उडुवाओहा। औहोवाहाऊ। वा। आ
[।] ममद्रा२३यिभा३यिः। उडुवाओहा। औहो
वा। सुषावसो। उडुवाओहा। औहोवाहाऊ।
वा। हुवः। ममद्रिभिर्नृनम्पुनानोअविभिःपरिस्रा२३वा

२ र र र र र र र
३। उकुवाओहा। औहोवा। अदब्धस्तु। उकुवा

र र १र २र १ २ १
ओहा। औहोवाहाऊ। वा। ज्योतिः। रभिन्ता२

२ र र र १र २
३सा३ः। उकुवाओहा। औहोवाहाऊ। वा३(२) ॥

र र र र र र र ऽ र र र
उकुवाओहा। औहोवा। अदब्धस्ह। उकुवाओहा।

१र २र १ १ २ १
औहोवाहाऊ। वा। आवत्। रभिन्ता२३रा३ः।

र र र र र र र र र
उकुवाओहा। औहोवा। अदब्धस्तु। उकुवाओहा।

१र २र १ १ १ २ र र र
औहोवाहाऊ। वा। सूवः। रभिन्तरस्सुते चित्त्वाप्नुमदा

२र र २ १ र र र र र र र
मोअन्धा२३सा३। उकुवाओहा। औहोवा। ओण

र र र र १र २र २ १
न्तोगो। उकुवाओहो। औहोवाहाउ। वा। ज्यो

२ १ २ २ र र र १र २र
तिः। भिरुत्ता२३रा३म्। उकुवाओहा। औहोवा

२ १ १ १ १
हाऊ। वा३। ई२३४५(३) ॥ १२ * ॥

अस्य व्याख्यानम्—४भा० ३०५-३०६-३०७ पृष्ठेषु द्रष्टव्यम् । १२

---

* अभिप्लवस्य चतुर्थेऽह्नि माध्यन्दिने ।

२र र
प्रजापतिर्गायत्री सोमः ॥ अपत्यम् ॥ हाऊहाऊ
र र र र र २ र र १
हाऊ। अर्षासोमद्युमा२३त्तमा३ः। अभिद्रोणानिरोर
१ २र र र १ २
३रुवा३त्। सीदन्त्योनीवना२३यिषुवाऊ। वा३। ई२३
५ २ र र र २ २ र १
४डा(१)॥ अप्सा३इन्द्रायवा२३यवा३यि। वरुणायमरु२३
२ २र र १ २
त्निया३ः। सोमाअर्षन्तुवा२३यिष्णवाऊ। वा३। ई२
५ २ र र १ २ १ र १
३४डा(२)॥ इषन्तोकायनो२३दधा३त्। अस्मभ्यꣳसोमवा
२ २र र र र २
२३यिश्वता३ः। हाऊहाऊहाऊ। आपवस्वसहा२३स्रिणा
१ १ १ १ १
ऊ। वा३। इट्॰इडा२३४५(३)॥ १३ * ॥

अस्य व्याख्यानम् ३भा० ६१४-६१५-६१६ पृष्ठेषु द्रष्टव्यम्। ११

६ १
प्रजापतिर्गायत्री सोमः॥ शाक्करवर्णम्॥ एआर्षा।
र र र १ र र
मद्युमत्तमोभिद्रोणानिरो रुवात्। इडा। सीदन्यो
२ २ १ १ १र र र १
वना१यिषू३वा(१)॥ आप्साः। इन्द्रायवायवेवरुणाय

* द्वितीयाभिपूर्वे मयमेऽवनि ।

१ र र २ २ १
मह्र्२ङ्गिया:। इडा। सोमाअर्षन्तुवा१यिष्णा३वायि(२) ॥
१ २ र १र र र १
आयिषाम्। तोकायनोदधद्स्मभ्य७सोमवा२यिश्वता:।
र १ २
इडा। आपवस्वसहा२३स्रोयि। स्वायिणमा३१उवा२३।
१ १ १ १ १
इट्०इडा२३४५(३) ॥ १४* ॥

अस्यापि व्याख्यानम्—३भा० ६१४—६१६ पृष्ठेषु तदेव १४

२ र र र
वसिष्ठ: ककुबुत्तरा बृहत्यग्नि: ॥ याज्ञायज्ञावोअ
१ र२ र र र र १
ग्नयेवा। आयिराइराचदक्षसेपप्रोवयममृतञ्ज्ञा। तवा
२ १ २ १ ४ १
२३यिद्साम्। प्रायम्मित्रा२३७सू३। श्रा७सा२३४यि
र र ५ ५ २ १ २
षाम्। ओवा६। हाऊवा(१) ॥ प्रियोवा। मायित्र७सुश७
र र र र १ २ १ र २ १
सिषमूर्जोनपात७सच्चिना। यमा२३स्मयू:। दाशेमहा२३
४ १ र र ५ ५ २र १
व्या३। दाता२३४या। ओवा६। हाऊवा(२)॥ दाग्नोवा।
२ र र र र र १ २ १ २र
माहव्यदातयेभुवद्वाजेषता। भुवा२३द्वधायि। ऊतत्रा
१ ४ १ र र ५ ५
ता२३ता३। नू२३४नाम्। ओवा६। हाऊवा(३) ॥१५† ॥

अस्य व्याख्यानम्—३भा० १७५-१७६-१७७ पृष्ठेषु द्रष्टव्यम्। १५

* चतुर्थाभिप्लवे पञ्चमेऽहनि। † अभिजिति अग्निष्टोमसाम।

वसिष्ठः प्रथमा द्वितीया चानुष्टुभावन्त्या। बृहतीन्द्रः॥

२ २ २ १ १ २
रथन्तरम्॥ याज्ञायथाअपूर्विंयोवा। माघवन्वृत्रह

२ २ १ २ १ १ १ ४
त्यायतत्पृथिवीम्। अप्रा२३थयाः। तादस्तभ्ना२३ऊ

१ २ २ ५ ५ २ १
३। तोदा२३४यिवाम्। ओवाई। हाऊवा(१)॥ वन्नो

१२ २ १
वा। तेयज्ञोअजायततदर्कउतहस्कृतिस्तद्विश्वम। भि

२ १ २ २ १ ४ १ २
भू२३रसायि। याज्जातय्या२३वा३। जान्तू२३४वाम्।

२ २ ५ २ १ २ २ २ २
ओवा६। हाऊवा(२)॥ वमोवा। मासुपक्कमेरयआद्ध

२ २ २ २ १ २
र्यंरोहयोदिविघर्म्मन्नसामन्तपता। सुवा२३र्किभायिः।

१ २ १ ४ १ २ २ ५ ५
जुषुज्जिर्व्वा२३णा३। सायिवृ२३४हात्। ओवाई। हा

१
ऊवा। अस(३)॥ १६ *॥

अस्य व्याख्यानम्—४भा० ५०६-५०७-५०८ पृष्ठेषु द्रष्टव्यम्। १६

॥ इत्यूह्यगाने प्रथमः प्रपाठकः॥ १॥

———०३०———

* प्रथम-स्वरसामकि पृष्ठम्।

भरद्वाजो न्यङ्कुसारिणी स्कन्धोग्रीवीवोरो बृहती यास्क

२र २
इति प्रथमाऽनुष्टुभावुत्तरे इन्द्रः॥ बृहत्॥ औहोयि

२ २ २ २ १ २ २ २ ५
मत्स्यपायितेमहा३ए। पात्रस्येवा। हारायिवो२३४मा।

१ २ ३र ४र ५ २ १ २ ३
त्सरो३४। औहोवा। मदोनृषा। तेवा३१। ण्णआर

५ २र १र २ ३र ४र ५ १
३४यिन्दूः। वाजीमहा३४। औहोवा। सा२सातार

५ २र २
२३४। माः। उऊवा६हाऊ। वा(१)॥ औहोयिमत्रा३

१ १र २ ३ ५ १ १ ३र ४र ५
ए। नस्तेग। तूमत्सार२३४राः। वृषा३४। औहोवा।

२ १ १ २ १ २ २ १र २ ५
मदोवरायि। णाया३१ः। सहावा॰इन्द्रसाना२३४सा

२ १ २ २ ३र ४र ५ १
यिः। पृतनाषा३४। औहोवा। आ२माता२३४।

५ ५ २र २ २
याः। उऊवा६हाऊ। वा(२)॥ औहोयियस्त्व३ए। व॰

१ २ २ ३ ५ १र २ ३र ४र ५ १र
ह्विशूरास्साना२३४यिता। चोदा३४। औहोवा। यो

१ २ १ २ २ २ ३ ५
मानुषे। राथा३१म्। सहावान्दस्युमव्रा२३४ताम्।

